# पाठ ४

## भगीरथवरप्रदानम् ।

भगीरथस्तु राजर्षिर्धार्मिको रघुनन्दन ।
अनपत्यो महातेजाः प्रजाकामः स चाप्रजाः ॥ १ ॥
मन्त्रिष्वाधाय तद्राज्यं गङ्गावतरणे रतः ।
स तपो दीर्घमातिष्ठद्गोकर्णे रघुनन्दन ॥ २ ॥
तस्य वर्षसहस्राणि घोरे तपसि तिष्ठतः ।
सुप्रीतो भगवान्ब्रह्मा प्रजानां प्रभुरीश्वरः ॥ ३ ॥
ततः सुरगणैः सार्धमुपागम्य पितामहः ।
भगीरथं महात्मानं तप्यमानमथाब्रवीत् ॥ ४ ॥ (अवदत्)
भगीरथ महाभाग प्रीतस्तेऽहं जनेश्वर ।
तपसा च सुतप्तेन वरं वरय सुव्रत ॥ ५ ॥
तमुवाच महातेजाः सर्वलोकपितामहम् । (अवदत्)
भगीरथो महाबाहुः कृताञ्जलिपुटः स्थितः ॥ ६ ॥
यदि मे भगवान् प्रीतो यद्यस्ति तपसः फलम् ।
सगरस्यात्मजाः सर्वे मत्तः सलिलमाप्नुयुः ॥ ७ ॥
गङ्गायाः सलिलक्लिन्ने भस्मन्येषां महात्मनाम् ।
स्वर्गं गच्छेयुरत्यन्तं सर्वे मे प्रपितामहाः ॥ ८ ॥
देया च सन्ततिर्देव नावसीदेत् कुलं च नः ।
इक्ष्वाकूणां कुले देव एष मेऽस्तु वरः परः ॥ ९ ॥
उक्तवाक्यं च राजानं सर्वलोकपितामहः ।
प्रत्युवाच शुभां वाणीं मधुरां मधुराक्षराम् ॥१०॥ (प्रत्यवदत्)
मनोरथो महानेष भगीरथ महारथ ।
एवं भवतु भद्रं त इक्ष्वाकुकुलवर्धन ॥ ११ ॥

इयं हैमवती ज्येष्ठा गङ्गा हिमवतः सुता ।
तां वै धारयितुं राजञ्शिवो देवः प्रसाद्यताम् ॥ १२ ॥
गङ्गायाः पतनं वीर पृथिवी न सहिष्यते ।
तस्या धारयितारं च नान्यं पश्यामि शूलिनः ॥ १३ ॥
तमेवमुक्त्वा राजानं गङ्गां चाभाष्य लोककृत् ।
जगाम त्रिदिवं देवैः सर्वैः सह मरुद्गणैः ॥ १४ ॥ (अगच्छत्)

## टीपा

सगराचे ६०००० पुत्र पातालात दग्ध झाले होते त्यांचा उद्धार करण्याकरितां गंगेला स्वर्गांतून पातालात नेण्यासाठीं भगीरथ राजानें तपश्चर्या केली त्याला ब्रह्मदेव प्रसन्न झाला व त्यानें त्याला काय वर दिला हें या श्लोकांत सांगितलेलें आहे.

'अनपत्य —न विद्यते अपत्यं यस्य' 'अप्रजा —न विद्यते प्रजा यस्य सः' अशा रीतीचे नामाला [illegible] शिवा अन् जोडून नञ् बहुव्रीहि समास करता येतात

---

## प्रश्न

१ भगीरथाला उद्देशून काय काय विशेषणें योजलेलीं आहेत? त्यांचा अर्थ स्पष्ट करा.
२ वरील श्लोकातील सति सप्तम्यन्त रचना दर्शवून त्याबद्दल 'यदा तदा' हीं अव्यय योजून वाक्यें लिहा.
३ कांहीं विशेषणाची द्विरुक्ति झाली आहे. तीं दाखवा
४ ब्रह्मदेवाजवळ भगीरथानें काय मागणी केली तें स्वतःच्या शब्दात संस्कृतमध्यें लिहा.
५ ब्रह्मदेवानें भगीरथाला शंकर प्रसन्न झाला पाहिजे असें का सांगितलें?
६ समासाचा विग्रह करून नांवे सांगा —महातेजा । गङ्गावतरणम् । महाबाहु । सलिलक्लिन्ने । महात्मन् । मधुराक्षरा ।

पाठ करा —गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा ।
भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि ॥

# पाठ ५

## नमुचिकथा ।

निवसति स्म पुरा नमुचिर्नाम दानवसत्तमः । अहितायापि किञ्चिददेयं नासीद्दानप्रसक्तस्य तस्य । अर्थिप्रार्थना न कदापि विफलीकृता तेन । स बहुवर्षसहस्राणि तपस्तप्त्वा विरिञ्चालोद्दारसकाशादवध्यत्वं प्राप्नोत् । तेन विजित इन्द्रः स्वस्थानाच्च्युतो भूत्वा यत्रकुत्रापि गतः । पश्चाद्देवासुराणां सन्धिर्जातः कश्यपर्षेः प्रयत्नात् । अथ विश्रान्तवैरास्ते क्षीराम्भोनिधिं मन्दराद्रिणामथ्नन् । समुद्रमथनादुद्भूतेभ्यो रत्नेभ्यो नमुचिना गृहीत उच्चैःश्रवा हयः । मन्थपर्यन्ते लब्धममृतं हृतं त्रिदशैः । अतः पुनः सुरासुराणां वैरमजायत । देवासुररणे यो योऽसुरो हतस्तं तमाघ्रायोच्चैःश्रवा अजीवयत् । अतो दानवानजेयान्दृष्ट्वा बृहस्पतिः शक्रमवदत् ।

एकस्तत्रोपायोऽस्ति तं कुरुष्वाविलम्बितम् ।
स्वयं याचस्व गत्वा त्वं नमुचिं तं हयोत्तमम् ॥ इति ।

अतो महेन्द्रस्त्रिदशैः सह नमुचिं गत्वा हयोत्तममयाचत । चिरमर्जिता दातृत्वकीर्तिर्मया रक्षणीया वासवश्चार्थी विफलमनोरथो न कर्तव्य इति मत्वा स नमुचिरिन्द्रायोच्चैःश्रवसमयच्छत् । यावत्तेनाश्वो दत्तस्तावदेव शक्रेण वज्रन्यस्तेन गाढेन फेनेन लोहाश्मकाष्ठैरवध्यः स हतः । एतद्दृष्ट्वा तस्य शोकार्ता माता दनुस्तपोबलादैच्छत् । अयमेव नमुचिः पुनर्मे पुत्रत्वमाप्नुयादिति । एवं स एव नमुचिः पुनः सर्वदेवानामजेयः प्रबलो नाम दनुतनयोऽभवत् । सोऽपि तपस्तप्त्वा प्राणैरप्यर्थिनस्तोषयन्ख्यातकृत्व इन्द्रमजयत् । अतो देवाः सम्मन्त्र्य समुपेत्य तस्य देहमयाचन्त । स प्रबल आत्मनो देहं तेभ्योऽयच्छत् । स प्रबलदानवो देवैः खण्डशः कृतः पुनः प्रभासवपुषा जातो लोके ।

### टीपा

'यो य—स तम्—जो जो—त्याला त्याला' यद् व तद् ही सर्वनामें दोनदा योजिली म्हणजे असा अर्थ होतो

'विश्रान्तवैरा —विश्रान्त वैर येषाम् ते' हा बहुव्रीहि समास आहे हा समास विशेषणात्मक असून अन्य पद नाम आहे समासाचा अर्थ दोन्ही शब्दात पुरा होत नसून सर्व समासाच्या अर्थाचा संबंध तृतीय नामाशीं आहे

---

### प्रश्न

१ पुढील शब्दांच्या अर्थाने वरील गोष्टींतील शब्द लिहा —
दानशील, याचक, विधि, भ्रष्ट, देवै नीग्रम्, इन्द्र ।

२ समासाचा विग्रह करून नाव सांगा —
अधिप्रार्थना, देवासुराणाम्, बहुप्रयत्नेन, लोहाश्मकाष्ठ, शौकार्ता ।

३ रिकाम्या जागीं समास योजा —हत स प्य यै ते———(सुराभुरा)। हतम् अमृत यै ते (सुरा)। दत्त देह येन स (प्रबल)। विफल मनोरथ यस्य सः ———(इन्द्र)।

४ वाक्यें पुरीं करा —यद्यपि नमुचिना अथ दत्त तथापि ———। ब्रह्मण प्रसादात् ———। इन्द्र नमुचिं गाङ्गेन फेनेन भहन् यत ———। अत सुरै अमृत हतम् अत ———।

पाठ करा —असुरा दैत्यदैतेयदनुजेन्द्रारिदानवा ।
शुक्रशिष्या दितिसुता पूर्वदेवा सुरद्विष ॥

---

## पाठ ६

### स्वजातिर्दुरतिक्रमा ।

कस्मिंश्चिदपि तपोवने शालङ्कायनो नाम तपोधनो जाह्नवीं स्नानार्थं गतः। तस्य च सूर्योपासनां कुर्वतः काचिन्मूषिका श्येनेन गृहीता। तादृशीं तां दृष्ट्वा करुणार्द्रहृदयः स मुनिर्मुञ्च मुञ्चेति कुर्वाण-

स्तस्मिन्पाषाणखण्डं प्राक्षिपत् । पाषाणखण्डेन प्रहृतः स भूमौ पतितस्तन्मुखाच्च भ्रष्टा सा मूषिका । सा भयत्रस्ता कर्तव्यमजानती रक्ष रक्षेति जल्पन्ती मुनिचरणान्तिकमुपाविशत् । चेतनां लब्ध्वा श्येनो मुनिमब्रवीत् । भो मुने न युक्तमनुष्ठितं भवता यदहं पाषाणेन ताडितः । अपि तवाधर्मोद्भयं न विद्यते । तत्समर्पयेमां मूषिकां म इति । मुनिरवदत् । नाहं तुभ्यमिमां यच्छामि यतो रक्षणीयाः प्राणिनां प्राणा इति नीतिः । गच्छ त्वं स्वमार्गेण इति । अथ गते श्येने मूषिका तं मुनिमवदत् । स्वाश्रमं नयतु मां भवान् । नो चेदन्यो दुष्टपक्षी मां व्यापादयेदिति ।

इदं वचनं श्रुत्वा स मुनिः स्वहस्तेन मूषिकानयनमयुक्तं हास्यास्पदं चेति मत्वा तां च कन्यकां कृत्वा तपःप्रभावात्स्वाश्रममनयत् । गच्छता कालेन सा कन्या यौवनोन्मुखी जाता । अतोऽस्या विवाहः कार्य इति विचिन्त्य तेन सूर्यो मेघो वायुः पर्वतश्च क्रमेणाहूताः । किन्तु नैकोऽपि तेषां तस्यै पतित्वेऽरोचत । अतो मूषकमाहूय स तं तस्या अदर्शयत् । सापि तं दृष्ट्वा स्वजातीयोऽयं साधुतमो वरो भवतीति मत्वा मुनिमवदत् । तात मां मूषिकां कृत्वास्मै मूषकाय प्रयच्छ येन स्वजातिविहितं गृहस्थधर्ममनुभवामीति । तच्छ्रुत्वा स्त्रीधर्मविचक्षणेन तेन सा मूषिकाभावमापादिता तस्मै च मूषकाय प्रदत्ता ।

सूर्यं भर्तारमुत्सृज्य पर्जन्यं मारुतं गिरिम् ।
स्वजातिं मूषिका प्राप्ता स्वजातिर्दुरतिक्रमा ॥

टीपा

' अधर्मात् भयम् ' भीतिवाचक शब्द ज्याची भीति वाटते त्याची पंचमी योजून योजतात.

' भवान् आपादय–भवेन परिणामय '—क्लिष्ट नेणें.

' साधुतमः–सर्वांत चांगला '—विशेषणाला तम प्रत्यय जोडला म्हणजे सर्वांत श्रेष्ठ असा अर्थ होतो.

' गच्छता कालेन—दिवस चालले असताना '

### प्रश्न

१ किमर्थं श्येनो मुनिना ताडित ? मुनिना श्येनाय मूषिका किं न प्रत्यर्पिता ? किमर्थं मूषिका कन्यकाभावमापादिता मुनिना ? केन कारणेन मूषक एव कन्यकया वरो वृत ?

२ वरील गोष्टींतील सत षष्ठी व सति सप्तमी दर्शक-वाक्यांशाबद्दल गौण वाक्ये योजा.

३ रूपें ओळखा व त्याचा अर्थ सांगा—अजानती, कुर्वाण, लब्ध्वा, समर्प्य, विचिन्त्य, आहूता, दर्शित, व्यापादयेत् ।

४ क्षिप्, रुच्, अर्पय व भावमापाद्य याचा संस्कृत वाक्यांत उपयोग करा.

पाठ करा —१ उन्दुरुर्मूषिकोऽप्याखुर्गिरिका बालमूषिका ।
२ धव: पति प्रियो भर्ता ।
३ तपस्वी तापस पारिकाङ्क्षी वाचंयमो मुनि ।

---

## पाठ ७

### पञ्चवटीनिवासाश्रमः ।

श्रीरामो लक्ष्मणं वदतिः—

आगताः स्म यथोद्दिष्टममुं देशं महर्षिणा ।
अयं पञ्चवटीदेशः सौम्य पुष्पितपादपः ॥ १ ॥
सर्वतश्चार्यतां दृष्टिः कानने निपुणो ह्यसि ।
आश्रमः कतरस्मिन्नो देशो भवति सम्मतः ॥ २ ॥
वनरामण्यकं यत्र जलरामण्यकं तथा ।
सन्निकृष्टं च यत्र स्यात्समित्पुष्पकुशोदकम् ॥ ३ ॥
रमते यत्र वैदेही त्वमहं चैव लक्ष्मण ।
तादृशो दृश्यतां देशः सन्निकृष्टजलाशयः ॥ ४ ॥

स्तस्मिन्पाषाणखण्डं प्राक्षिपत्। पाषाणखण्डेन प्रहृतः स भूमौ पतित-स्तन्मुखाच्च भ्रष्टा सा मूषिका। सा भयत्रस्ता कर्तव्यमजानती रक्ष रक्षेति जल्पन्ती मुनिचरणान्तिकमुपाविशत्। चेतनां लब्ध्वा श्येनो मुनिमब्रवीत्। भो मुने युक्तमनुष्ठितं भवता यदहं पाषाणेन ताडितः। अपि तवाधर्माद्भयं न विद्यते। तत्समर्पयेमां मूषिकां मे इति। मुनिरवदत्। नाहं तुभ्यमिमां यच्छामि यतो रक्षणीयाः प्राणिनां प्राणा इति नीतिः। गच्छ त्वं स्वमार्गेण इति। अथ गते श्येने मूषिका तं मुनिमवदत्। स्वाश्रमं नयतु मां भवान्। नो चेदन्यो दुष्टपक्षी मां व्यापादयिष्यतीति।

इदं वचनं श्रुत्वा स मुनिः स्वहस्तेन मूषिकानयनमयुक्तं स्वाश्रपदं चेति मत्वा तां च कन्यकां कृत्वा तपःप्रभावात्स्वाश्रममनयत्। गच्छता कालेन सा कन्या यौवनोन्मुखी जाता। अतोऽस्या विवाह-कार्यं इति विचिन्त्य तेन सूर्यो मेघो वायुः पर्वतश्च क्रमेणाहूताः। किन्तु नैकोऽपि तेषां तस्यै पतित्वेऽरोचत। अतो मूषकमाहूय स तं तस्या अदर्शयत्। सापि तं दृष्ट्वा स्वजातीयोऽयं साधुतमो वरो भवतीति मत्वा मुनिमवदत्। तात मां मूषिकां कृत्वास्मै मूषकाय प्रयच्छ येन स्वजातिविहितं गृहस्थधर्ममनुभवामीति। तच्छ्रुत्वा स्त्रीधर्मविचक्षणेन तेन सा मूषिकाभावमापादिता तस्मै च मूषकाय प्रदत्ता।

सूर्यं भर्तारमुत्सृज्य पर्जन्यं मारुतं गिरिम्।
स्वजातिं मूषिका प्राप्ता स्वजातिर्दुरतिक्रमा॥

## टीपा

'भयार्थात् भयम्' भीतिवाचक शब्द ज्याची भीति वाटते त्याची पंचमी योजून योजतात.

'मानम् आपादय–भावेन परिणामय'—स्थितीप्रत नेणें.

'साधुतम–सर्वांत चांगला'—विशेषणाला तम प्रत्यय जोडला म्हणजे सर्वांत श्रेष्ठ असा अर्थ होतो.

'गच्छता कालेन–दिवस चालले असतांना'

३ 'रामो लक्ष्मणे वात्सल्येन व्यवाहरत्' इति का· श्लोकपङ्क्तयो दर्शयन्ति ।

४ समास सोडवून नांवें सांगा:—यथोद्दिष्टम् । पुष्पितपादपः । पद्मशोभिता । मयूरनादिता । बहुफलः ( देशः ) ।

पाठ करा.—अटव्यरण्यं विपिनं गहनं काननं वनम् ।

---

# पाठ ८

## वज्रनिर्मितिः ।

वसन्ति स्म पुरा कृतयुगे घोरा युद्धदुर्मदाः कालकेया इति विख्याता राक्षसाः । वृत्रो नाम प्रबलोऽसुरस्तेषां नायकः । तं समाश्रित्य नानाप्रहरणोद्यतास्ते दानवा महेन्द्रप्रमुखान्सुरानभ्यधावन्तीयादुन्वंश्च । महायत्नं कुर्वाणा अपि त्रिदशा नाशक्नुवन्वृत्रं हन्तुम् । अतः पुरन्दरं पुरस्कृत्य ते सर्व उपातिष्ठन् ब्रह्माणम् । ते तस्मै चतुराननाय स्वभयकारणमव्यक्तात्मानं च सङ्कटान्मोचयितुं तं प्रार्थयन्त । ततः कृताञ्जलींस्तान्सर्वान् परमेष्ठ्यवदत् । कथयामि खलु व उपायं वृत्रं हन्तुम् । महानुदारधीर्दधीचो नाम विख्यात ऋषिर्वर्तते । तं गत्वा यूयं तं वरं वृणुध्वम् । स धर्मात्मा सुप्रीतेनान्तरात्मना वरं वृणीध्वमिति ब्रूयात् । ततो जयाकाङ्क्षिभिर्युष्माभिरेवं वक्तव्यं यत् त्रैलोक्यस्य हिताय स्वान्यस्थीनि दीयन्तामिति । युष्मत्प्रार्थनां श्रुत्वा स्वशरीरमुत्सृज्य स वोऽस्थीनि दास्यति । तस्यास्थिभिर्महाघोरं भीमनिःस्वनं वज्रं निर्मीयतामिति त्वष्टारं प्रार्थयध्वम् । तेन वज्रेण युक्तः शतक्रतुर्वृत्रं हनिष्यतीति ।

एवमुक्तास्ते देवा पितामहमामन्त्र्य शक्रपुरःसराः शीघ्रमयुर्दधीचाश्रमम् । स आश्रमो नानाद्रुमलतावृतः सरस्वत्याः परे पारे स्थितः । तस्मिन्नाश्रमे दिवाकरसमद्युतिं दधीचमपश्यंस्ते देवाः ।

स तं रुचिरमाक्रम्य देशमाश्रमकर्मणि ।
हस्तं गृहीत्वा हस्तेन रामः सौमित्रिमब्रवीत् ॥ ५ ॥
अयं देशः समः श्रीमान्पुष्पितैस्तरुभिर्वृतः ।
इहाश्रमपदं सौम्य यथावत्कर्तुमर्हसि ॥ ६ ॥
इयमादित्यसङ्काशैः पद्मैः सुरभिगन्धिभिः ।
अदूरे दृश्यते रम्या पद्मिनी पद्मशोभिता ॥ ७ ॥
हंसकारण्डवाकीर्णा चक्रवाकोपशोभिता ।
इयं गोदावरी रम्या पुष्पितैस्तरुभिर्वृता ॥ ८ ॥
मयूरनादिता रम्याः प्रांशवो बहुकन्दराः ।
दृश्यन्ते गिरयः सौम्य फुल्लैस्तरुभिरावृताः ॥ ९ ॥
एवमुक्तस्तु रामेण लक्ष्मणः परवीरहा ।
अचिरेणाश्रमं भ्रातुश्चकार सुमहाबलः ॥ १० ॥ (अकरोत्)
रामो दृष्ट्वा कृतं सौम्यमाश्रमं सह सीतया ।
तस्मिन्देशे बहुफले न्यवसत्ससुखं सुखी ॥ ११ ॥
कञ्चित्कालं स धर्मात्मा सीतया लक्ष्मणेन च ।
अन्वास्यमानो न्यवसत्स्वर्गलोके यथामरः ॥ १२ ॥

## टीपा

'समित्पुष्पकुशोदकम्'—समिधः पुष्पाणि कुशाः उदकं च एतेषां समाहारः.' या समासाला समाहार द्वन्द्व असें म्हणतात. ह्या समासांत दोन अथवा अधिक शब्दांचा समुदायवाचक अर्थानें नपुं. एकवचनी स्वरूपांत बोलला जातो.

'परवीरहा'—परेषां वीरान् हन्ति सः परवीरहा (परवीरहन्). हा समास उपपद होय, कारण यांतील शेवटील पद 'हन्' हें फक्त समासाच्या शेवटींच येऊं शकतें. याच समासाचें दुसरें रूप 'परवीरघ्न' असेंहि होईल.

---

## प्रश्न

१ आश्रमरचनार्थं कीदृशं स्थलमावश्यकं तद्विस्तरेण वर्णयत ।

२ गोदावरी गिरयः पद्मिनी च कैः कैस्ताभिरशोभन्त तत्कथयत ।

# पाठ ९

## पतिव्रताप्रभावः ।



अथैकदा राजा भोजो धारानगरे एकाकी विचरन् कस्यचिद् विप्रवरस्य गृहं गत्वा तत्र काञ्चन पतिव्रतां स्वाङ्के शयानं भर्तारमुद्वहन्तीमपश्यत् । ततस्तस्याः शिशुः सुप्तोत्थितो ज्वालायाः समीपमगच्छत् । इयं च पतिव्रता स्वपतेर्निद्राभङ्गो मा भवत्विति मत्वा चह्नौ पतन्तं शिशुं न न्यवारयत् । राजा चाश्चर्यमालोक्य विस्मितः स्थितः । ततः सा पतिपरायणा वैश्वानरं प्रार्थयत । यज्ञेश्वर त्वं सर्वकर्मसाक्षी सर्वधर्माञ्जानासि । मामपि शिशुं ग्रहीतुमक्षमां जानासि । अतो मदीयशिशुमनुगृह्य त्वं तं मा दहेति । ततः शिशुर्यज्ञेश्वरं प्रविश्यार्धघटिकापर्यन्तं तत्रैवातिष्ठत् । ततो नारोदीत् प्रसन्नमुखः शिशुः । सा च ध्यानपरातिष्ठत् । ततो यदृच्छया समुत्थिते भर्तरि सा झटिति शिशुमुदधरत् । तं च परमधर्ममालोक्य विस्मयाविष्टो नृपतिराह । अहो मम समं भाग्यं कस्यास्ति यदीदृश्यः पुण्यस्त्रियोऽपि मन्नगरे वसन्तीति । ततः प्रातः सभामागत्य सिंहासन उपविष्टो राजा कालिदासं प्राह । सुकवे महदाश्चर्यं मया पूर्वेद्यू रात्रौ दृष्टमस्तीत्युक्त्वा स राजा पठति 'हुताशनश्चन्दनपङ्कशीतलः' इति ।

कालिदासस्तच्छ्रवणानन्तरं झटिति पठति ।

> सुतं पतन्तं प्रसमीक्ष्य पावके न बोधयामास पतिं पतिव्रता ।
> तदाभवत्तत्पतिभक्तिगौरवाद्धुताशनश्चन्दनपङ्कशीतलः ॥

इति कालिदासेन कृतं श्लोकं श्रुत्वा राजा भोजस्तमस्तवीत्पारितोषिकदानेन च सममानयत् तम् ।

तस्य पादावभिवाद्य परमेष्ठिनोक्तं वरं ते तमयाचन्त । तदा परमप्रीतः स दधीचो देवानब्रवीत् । करोम्यहं यद्वो हितं स्यात्तथा चात्मनो देहमप्युत्सृजामीति । एवमुक्त्वा स यमी स्वप्राणान्सहसैवाजहात् । तदा तस्य परासोरस्थीनि गृहीत्वा ते यथोपदेशं त्वष्टारमायन् । तेषां कार्यं ज्ञात्वा त्वष्टोग्ररूपं घोरं वज्रं कृत्वा शक्रमेवमवदत् ।

अनेन वज्रप्रवरेण देव भस्मीकुरुष्वाद्य सुरारिमुग्रम् ।
ततो हतारिः सगणः सुखं वै प्रशाधि कृत्स्नं त्रिदिवं दिविष्ठः ॥

## टीपा

'स्था (२ प प)—सांगणें' ज्याला सांगावयाचें त्याची चतुर्थी योजतात

'भस्मीकृ—भस्म करणें (भस्मन् + कृ)' वाहीं शब्दांना 'कृ व भू' यांचीं रूपें जोडतात व त्या वेळीं मागील शब्दाच्या अन्त्य 'न्' चा लोप करून उपान्त्य 'अ' चा 'ई' करतात यास 'च्वि' रूपें म्हणतात या रूपाचा अर्थ मूळ शब्दानें दर्शविलेली स्थिति पूर्वी नसतांना ती नवीन आणणें किंवा होणें असा होतो

---

## प्रश्न

१ इन्द्रो वृत्रवधकथा स्वयमेव कथयतीति विचिन्त्य वर्णयत ।

२ भवता स्वान्यस्थीनि दीयन्ताम् । यूयं दधीचं वरं याचध्वम् । दानवा सुरानदुन्वन् । या वाक्यांचे प्रयोग बदला

३ समाश्रित्य, पुरस्कृत्य, उत्सृज्य, आमन्त्र्य हीं रूपें काय आहेत हें सांगून त्यांतील धातूंचीं उपसर्गांसहित प्रथमभूतकाळीं तृ. पु एकवचनी रूपें वाक्यांत योजा.

४ महेन्द्रप्रमुखा (देवा), चतुरानन (ब्रह्मा), भीमनिस्वनः (वज्र), उग्ररूप (वज्र) या समासांचा विग्रह करून नावें सांगा

५ दधीच व नमुचि यांच्यामध्यें कथांमध्यें साम्य होतें तें थोडक्यांत लिहून स्वभाव हा कुळावर अथवा जातीवर अवलंबून असतो कीं काय तें सांगा.

पाठ करा —ह्रादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः ।
शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः ॥

ज्येष्ठस्तस्य महाबाहुः पुत्रः प्रियकरः प्रभुः ।
पितुर्निदेशान्निष्क्रान्तः प्रविष्टो दण्डकावनम् ॥ २ ॥

लक्ष्मणेन सह भ्रात्रा सीतया चापि भार्यया ।
रामो नाम महातेजा धर्म्यं पन्थानमाश्रितः ॥ ३ ॥

तस्य भार्या वने नष्टा सीता पतिपरायणा ।
वैदेहस्य सुता राज्ञो जनकस्य महात्मनः ॥ ४ ॥

स मार्गयन् प्रियां भार्यां राजपुत्रः सहानुजः ।
ऋष्यमूकमनुप्राप्तः सुग्रीवेण समागतः ॥ ५ ॥

तस्य तेन प्रतिज्ञातं सीतायाः परिमार्गणम् ।
सुग्रीवस्यापि रामेण हरिराज्यं निवेदितम् ॥ ६ ॥

ततस्तेन मृधे हत्वा राजपुत्रेण वालिनम् ।
सुग्रीवः स्थापितो राज्ये हर्यृक्षाणां गणेश्वरः ॥ ७ ॥

अहं सुग्रीवसन्देशादिह प्राप्तस्तवालयम् ।
राक्षसेन्द्र हरीशस्त्वां भ्राता कुशलमब्रवीत् ॥ ८ ॥

भ्रातुः शृणु समादेशं सुग्रीवस्य महात्मनः ।
धर्मार्थोपहितं वाक्यमिह चामुत्र च क्षमम् ॥ ९ ॥

अहं तु हनुमान्नाम मारुतस्यौरसः सुतः ।
सीतायास्तु कृते तूर्णं शतयोजनमायतम् ॥ १० ॥

समुद्रं लङ्घयित्वैव तां दिदृक्षुरिहागतः ।
भ्रमता च मया दृष्टा गृहे ते जनकात्मजा ॥ ११ ॥

तद्भवान् दृष्टधर्मार्थस्तपःकृतपरिग्रहः ।
परदारान् महाप्राज्ञ नोपरोद्धुं त्वमर्हसि ॥ १२ ॥

न चास्ति त्रिषु लोकेषु राजन् विद्येत कश्चन ।
राघवस्य व्यलीकं यः कृत्वा सुखमवाप्नुयात् ॥ १३ ॥

देवाश्च दैत्याश्च निशाचरेन्द्र गन्धर्वविद्याधरनागयक्षाः ।
रामस्य लोकत्रयनायकस्य स्थातुं न शक्ताः समरेषु सर्वे ॥ १४ ॥

## टीपा

'सुप्तोत्थित –आधी सुप्त पश्चादुत्थित —झोंपून उठलेला'—कर्मधारय समास. दोन कर्मणि भूत धातु विशेषणें एकत्र जोडून हा समास बनतो. यांतील पहिलें भू. धा. वि. पूर्वीची क्रिया दर्शवितें व दुसरें नंतरची क्रिया दर्शवितें.

'विप्रवर —विप्रेषु वर' वर शब्द 'श्रेष्ठ' या अर्थी नामाला जोडण्याचा प्रघात आहे व तो समास सप्तमी-तत्पुरुष होतो.

'समस्यापूर्ति'—कवितेच्या एका चरणाला जुळेल असा दुसरा चरण रचून कविता पुरी करणें याला समस्यापूर्ति असें म्हणतात. या पाठांतील श्वशुराचा श्लोक तसा आहे.

---

## प्रश्न

१ वरील गोष्टींतील वर्तमानकालवाचक धातुसाधित विशेषणें ओळखून त्यांचा उपयोग स्पष्ट करा.

२ पतिव्रताप्रभावमुद्दिश्य कामप्यन्यां कथां सङ्क्षेपेण लिखत ।

३ अन्त्य पद 'वर' असणारे समास पुढील नामापुढं रिकाम्या जागीं लिहा —
नल ________ । अर्जुन ________ । इन्द्र ________ ।
गङ्गा ________ । हिमालय ________ ।

४ पुढील समासाचा विग्रह करून नावें सांगा —
विस्मयाविष्ट, पुण्यश्लोक, प्रसन्नमुख, निद्रामग्न, चन्दनपङ्कशीतल ।

पाठ करा —१ यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः ।
२ पुरन्ध्री सुचरित्रा तु सती साध्वी पतिव्रता ।

---

# पाठ १०

## मारुते रावणं प्रत्युपदेशः ।

राजा दशरथो नाम रथकुञ्जरवाजिमान् ।
पितेव बन्धुलोकस्य सुरेश्वरसमद्युतिः ॥ १ ॥

# पाठ ११

## मूर्खभृत्यस्य।



आसीत्पुरा महाधनो नाम वणिग्वसुग्रामे। स विविधानि वस्तूनि विक्रयार्थमानेतुं ग्रामान्तरं गतः। तेन सह गतो भृत्यस्तस्य साहाय्यार्थमुष्ट्रश्च वस्त्रभारं वोढुम्। ग्रामं गत्वा सोऽक्रीणाद्बहूनि वस्त्राणि। तानि वस्त्राणि चर्मावृतासु पेटासु स्थापयित्वा ताश्चोष्ट्रपृष्ठे निधायोभौ तौ प्रातिष्ठेतां स्वनगरम्। मार्गमध्ये स करभोऽवसन्नोऽभवद्गुरुणा भारेण। अतः स वणिग्भृत्यमवदद्यावदहं कञ्चिदन्यमुष्ट्रमानयामि तावत्त्वमत्रावहितो भव। वर्षति पर्जन्ये यथाम्भो वस्त्रपेटास्वेतासु चर्मापि न स्पृशेत्तथा त्वया कर्तव्यमिति। करभान्तरं क्रेतुं गते तस्मिन्वणिजि प्रारभन्त मेघा वर्षितुम्। अतः स्वामिवचनं भृत्येन सर्वभावेनानुष्ठातव्यमिति मनसि कृत्वा स आज्ञाधारको भृत्यः सत्वरं पेटाभ्यो वस्त्राण्याकृष्य तैः स ताश्चर्मावृताः पेटाः समावृणोद्यथा पर्जन्यवारिणा तानि चर्माणि न नश्येयुः।

यावत्स उष्ट्रं क्रीत्वा प्रत्यागतस्तावत्तेन सर्वाण्यात्मनो बहुमूल्यानि वस्त्राणि जलक्लिन्नानि दृष्टानि। अतः क्रुद्धतां गतः स वणिक्तमपृच्छत्तारस्वरेण। किमेतत्कृतं त्वया। वस्त्रनाशं स्थिरचित्तेन पश्यन् कथं न लज्जसे त्वमिति। मैवं मन्यतां स्वामी। मया तु भवन्निदेशो यथाक्षरमनुष्ठितः। वर्षजलाच्चर्मवेष्टितानां पेटानां रक्षणं कार्यमिति भवता कथितम्। न च तदन्तःस्थितानां वस्त्राणाम्। अतो मया तत्सम्यगेव कृतं न वेति पश्यतु स्वामी। एतत्तस्य मूर्खस्य वचनं श्रुत्वा स्वदैवं निन्दंस्तानि वस्त्राणि पुनरपि पेटिकासु स्थापयित्वा ताश्च करभपृष्ठ आरोप्य स्वगृहं प्रतिनिवृत्तः। अतः खल्विदमुच्यते।

एवमज्ञातहृदया मूर्खा कृत्वा विपर्ययम्।
उपहास्याः परेषां च शोच्याः स्वेषां भवन्ति च॥

ब्रह्मा स्वयम्भूश्चतुराननो वा रुद्रस्त्रिनेत्रस्त्रिपुरान्तको वा ।
इन्द्रो महेन्द्रः सुरनायको वा त्रातुं न शक्ता युधि रामवध्यम् १५

## टीपा

'धर्म्यैः-धर्मादनपेतैः' धर्म, अर्थ न्याय याना 'न सोडलेला' या अर्थी 'य' हा प्रत्यय लावून विशेषणें केली आहात. असें—अर्थ्य, न्याय्य.

'बन्धुलोकः-बन्धुजनः—बान्धवांचा समूह' 'लोक व जन' हे शब्द समासाच्या शेवटीं आले असता प्रथम पदानें दर्शविलेल्या गोष्टींचा समूह असा अर्थ होतो. असें, राजलोकः, तपस्विलोकः—जनः .

---

## प्रश्न

१ सीताहरणपर्यन्तं सकला श्रीरामकथा सङ्क्षेपेण गद्यरूपेण वर्णयत ।

२ हनुमानन्तिमेन श्लोकेन रावणं किं सूचयति ? तमर्थं के शब्दा दर्शयन्ति ?

३ १५ व्या श्लोकात काय विशिष्ट गोष्ट दिसते ?

४ हरिराज्यम्, महाबाहु॰, पतिपरायणा, हर्यृक्षा॰ याचा विग्रह करून नावें सांगा.

५ पुढील शब्दांबद्दल समास योजा:—पितुः निदेश॰ । प्रिया भार्या । सीतायाः परिमार्गणम् । त्रिषु लोकेषु । धर्म्यः पन्थाः ।

६ 'पथिन्' शब्दाची सर्व रूपें लिहा.

पाठ करा:—समुद्रोऽब्धिरकूपार: पारावार: सरित्पतिः ।
उदन्वानुदधिः सिन्धुः सरस्वान् सागरोऽर्णवः ।
रत्नाकरो जलनिधिर्यादःपतिरपाम्पतिः ॥

---

# पाठ ११

## मूर्खभृत्यस्य ।

आसीत्पुरा महाधनो नाम वणिग्वसुग्रामे। स विविधानि वस्तूनि विक्रयार्थमानेतुं ग्रामान्तरं गतः। तेन सह गतो भृत्यस्तस्य साहाय्यार्थमुष्ट्रश्च वस्त्रभारं वोढुम्। ग्रामं गत्वा सोऽक्रीणाद्बहूनि वस्त्राणि। तानि वस्त्राणि चर्मावृतासु पेटासु स्थापयित्वा तांश्चोष्ट्रपृष्ठे निधायोभौ तौ प्रातिष्ठेतां स्वनगरम्। मार्गमध्ये स करभोऽवसन्नोऽभवद्गुरुणा भारेण। अतः स वणिग्भृत्यमवदद्यावदहं कश्चिदन्यमुष्ट्रमानयामि तावत्त्वमत्रावहितो भव। वर्षति पर्जन्ये यथाम्भो वस्त्रपेटास्वेतासु चर्मापि न स्पृशेत्तथा त्वया कर्तव्यमिति। करभान्तरं क्रेतुं गते तस्मिन्वणिजि प्रारभन्त मेघा वर्षितुम्। अतः स्वामिवचनं भृत्येन सर्वभावेनानुष्ठातव्यमिति मनसि कृत्वा स आज्ञाधारको भृत्यः सत्वरं पेटाभ्यो वस्त्राण्याकृष्य तैः स ताश्चर्मावृताः पेटाः समावृणोद्यथा पर्जन्यवारिणा तानि चर्माणि न नश्येयुः।

यावत्स उष्ट्रं क्रीत्वा प्रत्यागतस्तावत्तेन सर्वाण्यात्मनो बहुमूल्यानि वस्त्राणि जलक्लिन्नानि दृष्टानि। अतः क्रुद्धतां गतः स वणिक्तमपृच्छत्खरस्वरेण। किमेतत्कृतं त्वया। वस्त्रनाशं स्थिरचित्तेन पश्यन् कथं न लज्जसे त्वमिति। मैवं मन्यतां स्वामी। मया तु भवन्निदेशो यथाक्षरमनुष्ठितः। वर्षजलाच्चर्मवेष्टितानां पेटानां रक्षणं कार्यमिति भवता कथितम्। न च तदन्तःस्थितानां वस्त्राणाम्। अतो मया तत्सम्यगेव कृतं न वेति पश्यतु स्वामी। एतत्तस्य मूर्खस्य वचनं श्रुत्वा स्वदैवं निन्दंस्तानि वस्त्राणि पुनरपि पेटिकासु स्थापयित्वा तांश्च करभपृष्ठ आरोप्य स्वगृहं प्रतिनिवृत्तः। अतः खल्विदमुच्यते।

एवमज्ञातहृदया मूर्खा कृत्वा विपर्ययम्।
उपहास्याः परेषां च शोच्याः स्वेषां भवन्ति च॥

'स्वजनवियोग'—वियोगवाचक शब्दाबरोबर ज्याच्यापासून वियोग दर्शवावयाचा असेल त्या अर्थाच्या शब्दाची तृतीया योजतात

'शसस्व'—शस् धातु परस्मैपदी आहे आत्मनेपदी रूप अपवादात्मक समजावें

'नु' हें अव्यय प्रश्न किंवा तर्क दर्शविणारें आहे

---

### प्रश्न

१ रामस्य शोक कै कै कारणैर्वर्धित ?

२ सीतामुद्दिश्य कानि विशेषणानि रामेण प्रयुक्तानि सन्ति ?

३ वरील श्लोकांतील उपमांचें स्पष्टीकरण करून त्यांची सार्थता दाखवा.

४ ४, ६ व ७ या श्लोकांतील शब्दरचनेमध्यें काय वैशिष्ट्य दिसून येतें ?

५ ९ व १० या श्लोकांत आदित्य व वायु यांच्याबद्दल काय माहिती मिळते ?

६ समास सोडवून नावें सांगा —व्यसनानुरूपम्, जननीवियोग, उदारशीला, कान्तस्मिता, पद्मानना, पक्षिगणा ।

पाठ करा —अनुलापो मुहुर्भाषा विलाप परिदेवनम् ।
विप्रलापो विरोधोक्ति सलापो भाषण मिथ ॥

---

## पाठ १३

### अश्वत्थामा पितृमरणवार्तां शृणोति ।

---

(नेपथ्ये) कुतोऽद्यापि ते तातः ।

अश्वत्थामा—(श्रुत्वा) किं ब्रूथ—कुतोऽद्यापि ते तात इति । (सरोषम्) आः क्षुद्रा समरभीरव कथमेवं प्रलपतां वः सहस्रधा न शीर्णमनया जिह्वया ।

(तत प्रविशति सम्भ्रान्त सप्रहार सूत )

सूत.—परित्रायतां परित्रायतां कुमारः । (इति पादयो पतति)

अश्वत्थामा—( विलोक्य ) अये कथं तातस्य सारथिरश्वसेनः। आर्य ननु त्रैलोक्यत्राणक्षमस्य तातस्य सारथिरसि। किं मत्तः परित्राणमिच्छसि।

सूतः—( उत्थाय सकरुणम् ) कुतोऽद्यापि ते तातः।

अश्वत्थामा—( सावेगम् ) किं तात एव नास्ति।

सूतः—अथ किम्।

अश्वत्थामा—हा तात। ( इति मोहमुपगतः )

सूतः—कुमार समाश्वसिहि, समाश्वसिहि।

अश्वत्थामा—( लब्धसंज्ञः सास्रम् ) हा तात हा सुतवत्सल हा लोकत्रयैकधनुर्धर कासि। प्रयच्छ मे प्रतिवचनम्।

सूतः—कुमार अलमत्यन्तशोकावेगेन। वीरपुरुषोचितां विपत्तिमुपगते पितरि त्वमपि तदनुरूपेणैव वीर्येण शोकसागरमुत्तीर्य सुखी भव।

अश्वत्थामा—( अश्रूणि विमुच्य ) आर्य कथय कथय कथं तादृग्भुजवीर्यसागरस्तातोऽपि नामास्तमुपगतः।

किं भीमाद्गुरुदक्षिणां गुरुगदाद्भीमप्रियः प्रातयान्।

सूतः—शान्तं पापम्। शान्तं पापम्।

अश्वत्थामा—

अन्तेवासिदयालुरुज्झितनयेनासादितो जिष्णुना॥

सूतः—कथमेवं भविष्यति ?

अश्वत्थामा—

गोविन्देन सुदर्शनस्य नियतं धारापथं प्रापितः।

सूतः—एतदपि नास्ति।

अश्वत्थामा—

शङ्के नापदमन्यतः खलु गुरोरेभ्यश्चतुर्थादहम्॥

सूतः—कुमार

## टीपा

‘पश्यन्कथं न लज्जसे-पाहत राहताना तुला कशी लाज वाटत नाही!’ लज्ज् व त्याच अर्थाचीं क्रियापदें योजतांना जी गोष्ट करण्याची लाज वाटते त्याबद्दल वर्तमानकालवाचक धातुसाधित योजतात.

‘आरोप्य’ हें ‘आ+रुह्’ या धातूच्या प्रयोजक रूपाचें त्वान्त अव्यय आहे. अर्थ-ठेवून.

## प्रश्न

१ भृत्येन वणिगादेशः कथं यथाक्षरमनुष्ठितस्तद्वर्णयत ।

२ चर्मावृता, स्वामिवचनम्, बहुमूल्यानि, भवन्निदेशः यांचा विग्रह करून नावें सांगा.

३ या गोष्टींतील सति सप्तमीच्या रचना वगळून त्यांच्याबद्दल ‘यदा-तदा, यावत्-तावत्’ अशी अव्ययें असलेलीं वाक्यें लिहा.

४ आरोप्य, अवसन्न, प्रतिनिवृत्त, अनुष्ठातव्यम् हीं रूपें पूर्णपणें ओळखून त्यांचा वाक्यांत उपयोग करा.

५ ‘मया भवन्निदेशो यथाक्षरमनुष्ठितः। वणिजा वस्त्राणि जलक्लिन्नानि दृष्टानि। स बहूनि वस्त्राण्यक्रीणात्। स वाणिक् तं तारस्वरेणापृच्छत्।’ या वाक्यांचा प्रयोग बदला.

पाठ करा —१ वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकम् ।
२ वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक् ।
पण्याजीवो ह्यापणिकः क्रयविक्रयिकश्च सः ॥

# पाठ १२

## सीतावियुक्तस्य रामस्य विलापः ।

स लक्ष्मणं शोकवशाभिपन्नं शोके निमग्नो विपुले तु रामः ।
उवाच वाक्यं व्यसनानुरूपमुष्णं विनिःश्वस्य रुदन् सशोकम् ॥ १ ॥
(अवदत्)

राज्यप्रणाशः स्वजनैर्वियोगः पितुर्विनाशो जननीवियोगः ।
सर्वाणि मे लक्ष्मण शोकवेगमापूरयन्ति प्रविचिन्तितानि ॥ २ ॥

सर्वं तु दुःखं मम लक्ष्मणेदं शान्तं शरीरे वनमेत्य शून्यम् ।
सीतावियोगात्पुनरप्युदीर्णं काष्ठैरिवाग्निः सहसा प्रदीप्तः ॥ ३ ॥

मया विहीना विजने जने या रक्षोभिराहृत्य विकृष्यमाणा ।
नूनं विनादं कुररीव दीना सा मुक्तवत्यायतकान्तनेत्रा ॥ ४ ॥

अस्मिन् मया सार्धमुदारशीला शिलातले पूर्वमिहोपविष्टा ।
कान्तस्मिता लक्ष्मण जातहासा त्वामाह सीता बहुवाक्यजातम् ॥ ५ ॥

गोदावरीयं सरितां वरिष्ठा प्रिया प्रियाया मम नित्यकालम् ।
अप्यत्र गच्छेदिति चिन्तयामि नैकाकिनी याति हि सा कदाचित् ॥ ६ ॥

पद्मानना पद्मविशालनेत्रा पद्मानि वानेतुमभिप्रयाता ।
तदप्ययुक्तं न हि सा कदाचिन्मया विना गच्छति पङ्कजानि ॥ ७ ॥

*कामं त्विदं पुष्पितवृक्षषण्डं नानाविधैः पक्षिगणैरुपेतम् ।*
वनं प्रयाता नु तदप्ययुक्तमेकाकिनी सातिबिभेति भीरुः ॥ ८ ॥

आदित्य भो लोककृताकृतज्ञ लोकस्य सत्यानृतकर्मसाक्षिन् ।
मम प्रिया सा क्व गता हृता वा शंसस्व मे शोकवशस्य सत्यम् ॥ ९ ॥

लोकेषु सर्वेषु च नास्ति किञ्चिद्यत्ते न नित्यं विदितं भवेत्तद् ।
शंसस्व वायो कुलशालिनीं तां हृता मृता वा पथि वर्तते वा ॥ १० ॥

अतीव तं शोकविधेयदेहं रामं विसंज्ञं विलपन्तमेवम् ।
उवाच सौमित्रिरदीनसत्त्वो न्याये स्थितः कालहितं च वाक्यम् ॥ ११ ॥

शोकं विमुञ्चार्य धृतिं भजस्व सोत्साहता चास्तु विमार्गणेऽस्याः ।
उत्साहवन्तो हि नरा न लोके सीदन्ति कर्मस्वतिदुष्करेषु ॥ १२ ॥

## टीपा

‘बहुवाक्यजातम्–पुष्कळ वाक्यांचा समूह’ नामान्या पुढें जात हा शब्द जोडला म्हणजे त्या नामानें दर्शविलेल्या पुष्कळ वस्तु असा अर्थ होतो

'स्वजनैर्वियोगः'—वियोगवाचक शब्दाबरोबर ज्याच्यापासून वियोग दर्शवावयाचा असेल त्या अर्थीच्या शब्दाची तृतीया योजतात.

'ग्रसस्व'-ग्रस् धातु परस्मैपदी आहे. आत्मनेपदी रूप अपवादात्मक समजावें.

'नु' हें अव्यय शंका किंवा तर्क दर्शविणारें आहे.

---

### प्रश्न

१ रामस्य शोकः कैः कैः कारणैर्वर्धितः ?

२ सीतामुद्दिश्य कानि विशेषणानि रामेण प्रयुक्तानि सन्ति ?

३ वरील श्लोकांतील उपमांचें स्पष्टीकरण करून त्यांची सार्थता दाखवा.

४ ४, ६ व ७ या श्लोकांतील शब्दरचनेमध्यें काय वैशिष्ट्य दिसून येतें ?

५ ९ व १० या श्लोकांत आदित्य व वायु यांच्याबद्दल काय माहिती मिळते ?

६ समास सोडवून नावें सांगा:—व्यसनानुरूपम्, जननीवियोगः, उदारशीला, कान्तस्मिता, पद्मानना, पक्षिगणाः ।

पाठ करा —अनुलापो मुहुर्भाषा विलापः परिदेवनम् ।
विप्रलापो विरोधोक्तिः संलापो भाषणं मिथः ॥

---

## पाठ १२

### अश्वत्थामा पितृमरणवार्तां शृणोति ।

---

(नेपथ्ये) कुतोऽद्यापि ते तातः ।

अश्वत्थामा—(श्रुत्वा) किं ब्रूथ–कुतोऽद्यापि ते तात इति । (सरोषम्) आः क्षुद्राः समरभीरवः कथमेवं प्रलपतां वः सहस्रधा न दीर्णमनया जिह्वया ।

(ततः प्रविशति सम्भ्रान्तः सप्रहारः सूतः)

सूतः—परित्रायतां परित्रायतां कुमारः । (इति पादयोः पतति)

अश्वत्थामा—( विलक्ष्य ) अये कथं तातस्य सारथिरश्वसेनः। आर्य ननु त्रैलोक्यत्राणक्षमस्य तातस्य सारथिरसि। किं मत्तः परित्राणमिच्छसि।

सूतः—( उत्थाय सकरुणम् ) कुतोऽद्यापि ते तातः।

अश्वत्थामा—( सावेगम् ) किं तात एव नास्ति।

सूतः—अथ किम्।

अश्वत्थामा—हा तात। ( इति मोहमुपगतः )

सूतः—कुमार समाश्वसिहि, समाश्वसिहि।

अश्वत्थामा—( लब्धसंज्ञः सास्रम् ) हा तात हा सुतवत्सल ‼! लोकत्रयैकधनुर्धर क्वासि। प्रयच्छ मे प्रतिवचनम्।

सूतः—कुमार अलमत्यन्तशोकावेगेन। वीरपुरुषोचितां विपत्तिमुपगते पितरि त्वमपि तदनुरूपेणैव धैर्येण शोकसागरमुत्तीर्य सुखी भव।

अश्वत्थामा—( अश्रूणि विमुच्य ) आर्य कथय कथय कथं तादृग्भुजवीर्यसागरस्तातोऽपि नामास्तमुपगतः।

किं भीमाद्गुरुदक्षिणां गुरुगदाद्भीमप्रियः प्राप्तवान्।

सूतः—शान्तं पापम्। शान्तं पापम्।

अश्वत्थामा—

अन्तेवासिदयालुरुज्झितभयेनासादितो जिष्णुना॥

सूतः—कथमेवं भविष्यति ?

अश्वत्थामा—

गोविन्देन सुदर्शनस्य नियतं धारापथं प्रापितः।

सूतः—एतदपि नास्ति।

अश्वत्थामा—

शङ्के नापदमन्यतः खलु गुरोरेष्वश्चतुर्थादहम्॥

सूतः—कुमार

एतेऽपि तस्य कुपितस्य महास्त्रपाणेः
किं धूर्जटेरिव तुलामुपयान्ति संख्ये।
शोकापनुन्नहृदयेन यदा तु शस्त्रम्
त्यक्तं तदास्य विहितं रिपुणातिघोरम्॥

अश्वत्थामा—किं पुनः कारणं शोकस्यास्त्रपरित्यागस्य वा।

सूतः—ननु कुमार एव कारणम्।

अश्वत्थामा—कथमहमेव नाम।

सूतः—श्रूयताम्। (अश्रूणि विमुच्य)

अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा
स्वैरं शेषे गज इति किल व्याहृतं सत्यवाचा।
तच्छ्रुत्वासौ दयिततनयः प्रत्ययात्तस्य राज्ञः
शस्त्राण्याजौ नयनसलिलं चापि तुल्यं मुमोच॥ (अधुयर्)

अश्वत्थामा—हा तात हा सुतवत्सल हा वृथा मदर्थत्यक्तजीवित हा शौर्यराशे हा शिष्यप्रिय हा युधिष्ठिरपक्षपातिन्। (इति रोदिति)

सूतः—कुमार अलमत्यन्तपरिदेवनकार्पण्येन।

४ अश्वत्थामा पितरमुद्दिश्य कानि कानि विशेषणानि प्रयोजयति ?

५ द्रोणस्य मृत्यो॰ कारणमश्वत्थामा कथं जात ?

पाठ करा:—१ धन्वी धनुष्मान्धानुष्को निषङ्गयस्त्री धनुर्धरः ।
२ अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम् ।

---

# पाठ १४

## मेघान्योक्तयः ।

मुञ्च मुञ्च सलिलं दयानिधे नास्ति नास्ति समयो विलम्बने ।
अद्य चातककुले मृते पुनर्वारि वारिधर किं करिष्यसि ॥ १ ॥
चातकस्य खलु चञ्चुसम्पुटे नो पतन्ति किल वारिबिन्दवः ।
सागरीकृतमहीतलस्य किं क्षेप एव जलदस्य दीयते ॥ २ ॥
ऊपरेषु विवरेषु चाम्भसो वीप्सयोऽपि भवता विनिर्मिताः ।
क्षेत्रसीम्नि निहितास्तु बिन्दवो वारिवाह भवतो नवो नयः ॥ ३ ॥
पानीयमानीय परिश्रमेण पाथोद पाथोनिधिमध्यतस्त्वम् ।
कल्पद्रुमे सीदति साभिलाषे महोपरे मुञ्चसि किंनिमित्तम् ॥ ४ ॥
वितर वारिद वारि दयातुरे चिरपिपासितचातकपोतके ।
प्रचलिते मरुति क्षणमन्यथा क्व च भवान् क्व पयः क्व च चातकः ५
किसलयानि कुतः कुसुमानि वा क्व च फलानि तथा नवर्वारिधाम् ।
अयमकारणकारुणिको न चेद्वितरतीह पयांसि पयोधरः ॥ ६ ॥

### टीपा

अन्योक्तिः—हा एक अलंकार आहे. जेव्हा एकाद्यास उद्देशून कांहीं बोलावयाचें असतें तेव्हा दुसऱ्या कोणास तरी उद्देशून तें म्हणावयाचें, परंतु त्याच्या अर्थाचा रोख मात्र पहिल्या

व्यक्तीकडेच असतो या अलंकारास 'अप्रस्तुतप्रशंसा' असेंहि नाव देतात. वरील श्लोकांत मेघाला उद्देशून वर्णन केलेलें आहे असें दिसतें परंतु त्याचा उद्देश मेघासारख्या वर्तनाच्या मनुष्याचें वर्णन करण्याचा आहे

'वि+तृ-देणें' याचा उपयोग चतुर्थ्यन्त किंवा सप्तम्यन्त नामाबरोबर करतात. मेघ व चातक पक्षी यासंबंधी पुढील कविकल्पना आहे. चातक पक्षी मेघबिन्दूवर जिवंत राहातो असा समज आहे

---

### प्रश्न

१ वरील श्लोकाचा अर्थ कोणत्या तऱ्हेच्या मनुष्यास लागू पडतो हें सविस्तर सांगा

२ संपत्ति क्षणिक व चंचल आहे हें कोणत्या श्लोकार्धांत दर्शविलें आहे तें स्पष्ट करा.

३ चौथ्या श्लोकामध्यें पहिल्या चरणातील प्रत्येक शब्दाचा पहिला वर्ण सारखा आहे. या शब्दालंकाराला 'अनुप्रास' असें म्हणतात. अशा तऱ्हेचीं अनुप्रासाचीं इतर उदाहरणें सांगा.

४ पुढील शब्दांचे अर्थांला अनुरूप असे दोन समूह करा —
चातक, वारिधर, जलद, शिखर, कल्पद्रुम, क्षेत्रसीमा, महीधरम्।

पाठ करा—अभ्र मेघो वारिवाह स्तनयित्नुर्बलाहकः ।
धाराधरो जलधरस्तडित्वान्वारिदोऽम्बुभृत् ॥

---

## पाठ १५

### कालिदासस्य चातुर्यम् ।

अथ कदाचिद्भोजेन विलासार्थं नूतनगृहान्तरं निर्मितम्। तस्मिन् गृहान्तरे गृहप्रवेशात्पूर्वमेकः कश्चिद्ब्रह्मराक्षसः प्रविष्टः । स च रात्रौ ये तत्र वसन्ति तान् भक्षयति । ततो मान्त्रिकानाहूय तदु-

ध्वाटनाय राजा यतते स्म। स चागच्छन्नेव मान्त्रिकान् भक्षयति। किंच स्वयं कवित्वादिकं पूर्वाभ्यस्तमेव पठंस्तिष्ठति। एवं स्थिते तत्रैव रक्षसि राजा कथमस्य निवृत्तिरिति व्यचिन्तयत्। तदा कालिदासः प्राह। देव नूनमयं राक्षसः सकलशास्त्रप्रवीणः सुकविश्च भाति। अतस्तमेव तोषयित्वा कार्यं साधयामि। मान्त्रिकास्तिष्ठन्तु। मम मन्त्रं पश्येत्युक्त्वा स्वयं तत्र रात्रौ गत्वा शेते स्म। ततः प्रथमयामे ब्रह्मराक्षसः समागतः। स च पूर्वं पुरुषं दृष्ट्वा प्रतियाममेकैकां समस्यां पठति। येनोत्तरं हृदयगतमुक्तं न भवति [illegible] स ब्राह्मण इति विचार्य स तं हन्ति। तदानीमपि पूर्ववदयमपूर्वः पुरुषोऽतो मया समस्या पठनीया। न चेद्वक्ति सदृशमुत्तरं तस्यास्तदा हन्तव्य इति निश्चित्य पठति 'सर्वस्य द्वे' इति। तदा कालिदासः प्राह 'सुमतिकुमती सम्पदापत्तिहेतू' इति। ततः स गतः। पुनरपि द्वितीययामे समागत्य पठति 'वृद्धो यूना' इति। तदा कविराह 'सह परिचयात्त्यज्यते कामिनीभिः' इति। तृतीये यामे स राक्षसः पुनस्तमागत्य पठति 'एको गोत्रे' इति। ततः कविराह 'प्रभवति पुमान् यः कुटुम्बं बिभर्ति' इति। ततश्चतुर्थयाम आगत्य स राक्षसः पठति 'स्त्रीपुंवच्च' इति। तदा कविराह 'प्रभवति यदा तद्धि गेहं विनष्टम्' इति। ततः स राक्षसो यामचतुष्टयेऽपि तुष्टः प्रभातसमये समागत्य तमाश्लिष्य प्राह। सुमते तुष्टोऽस्मि किं तवाभीष्टमिति। कालिदासः प्राह भगवन्नेतद् गृहं विहायान्यत्र गन्तव्यमिति। सोऽपि तथेत्युक्त्वा गतः। अनन्तरं तुष्टो भोजः कविं बहु मानितवान्।

मानितवान्–मन् च्या प्रयोजक रूपाचें कर्तरि भूत. धा. विशेषण पु. प्र. ए. व. 'विभर्ति–पोषण करतो' भृ (३ उ. प.) धातूचें कर्त. तृ. पु. एकवचनी प. पदी रूप.

---

### प्रश्न

१ राक्षसस्य को व्यवहारक्रम आसीत्प्रतिरात्रम् ? कालिदासस्य ब्राह्मणत्वस्य निश्चयो राक्षसेन कथं कृत ? कालिदासेन राक्षसः कथं तोषितः ?

२ गृहान्तरम्, प्रतियामम्, सम्पदाप्तिहेतू, सकलशास्त्रप्रवीण. या समासाचा विग्रह करून नावें सांगा.

३ 'पुंस् व युवन्' या शब्दाचीं सर्व रूपें लिहा.

४ आहूय, विहाय, तोषयित्वा, आलिङ्ग्य व समागत्य हीं रूपें पूर्णपणें ओळखून त्याच अर्थाचीं दुसऱ्या धातूंचीं ल्यबन्त अव्ययें लिहा.

पाठ करा:—गृहं गेहोदवसितं वेश्म सद्म निकेतनम् ।
निशान्तपस्त्यसदनं भवनागारमन्दिरम् ॥

---

## पाठ १६

### सज्जनप्रशंसा ।

छिन्नोऽपि रोहति तरुश्चन्द्रः क्षीणोऽपि वर्धते लोके ।
इति विमृशन्तः सन्तः सन्तप्यन्ते न लोकेऽस्मिन् ॥ १ ॥

वदनं प्रसादसदनं सदयं हृदयं सुधामुचो वाचः ।
करणं परोपकरणं येषां केषां न ते वन्द्याः ॥ २ ॥

सुजनो न याति वैरं परहितनिरतो विनाशकालेऽपि ।
छेदेऽपि चन्दनतरुः सुरभयति मुखं कुठारस्य ॥ ३ ॥

शारदि [illegible] वर्षति गर्जति वर्षति वर्षासु निःस्वनो मेघः ।
नीचो वदति न कुरुते न वदति सुजनः करोत्येव ॥ ४ ॥

यदमी दशन्ति दशना रसना तत्स्वादमनुभवति ।
प्रकृतिरियं विमलानां क्लिश्यन्ति यदन्यकार्येषु ॥ ५ ॥

अमृतं किरति हिमांशुर्विषमेव फणी समुद्गिरति ।
गुणमेव वक्ति साधुर्दोषमसाधुः प्रकाशयति ॥ ६ ॥

## टीपा

'सुरभयति—सुवासिक करतो.' सुरभि या विशेषणापासून होणाऱ्या नामधातूचें रूप
'सुधासुच—सुधा सुचति ते' समासाच्या शेवटीं एखाद्या क्रियापदापासून होणारें रूप आलें व तें स्वतन्त्रपणें उपयोगात येत नसलें तर त्या समासाला 'उपपद' समास म्हणतात.

---

## प्रश्न

१ पहिल्या श्लोकातील 'वृक्ष व चन्द्र' या उदाहरणाचें समर्पकत्व सिद्ध करा.

२ सज्जन कोणत्या गुणांनी वन्दनीय होतात हें संस्कृतमध्यें लिहा.

३ पुढील वाक्यें पुरी करा —
यथा हिमांशु अमृत किरति तथा ——— । यथा फणी विषम् उद्गिरति तथा ——— । विमला स्वयं क्लिश्यन्ति यथा ——— ।
यथा निःस्वन मेघ वर्षति तथा ——— ।

४ पुढील शब्दांच्या जोडीचे वरील श्लोकातील तुलनात्मक शब्द लिहा —
छेद ——— । सुरभयति ——— । फणी ——— ।
अमृत ——— । विषम् ——— । समुद्गिरति ——— ।
क्षपति ——— ।

५ वर्णयोजनेच्या दृष्टीनें कोणते श्लोक चांगले दिसतात तें सांगा.

पाठ करा —महाकुलकुलीनार्यसभ्यसज्जनसाधव ।
विद्वान् विपश्चिद्दोषज्ञ सन्सुधी कोविदो बुध ॥
धीरो मनीषी [illegible] प्राज्ञ संख्यावान् पण्डित कवि ।
धीमान् सूरि कृती कृष्टिर्लब्धवर्णो विचक्षण ॥

# पाठ १७

## शठं प्रति शाठ्यम् ।

अस्ति कस्मिंश्चिदधिष्ठाने जीर्णधनो नाम वणिक्पुत्रः । स च द्रव्यक्षयाद्देशान्तरगमनमना व्यचिन्तयत् ।

यत्र देशेऽथवा स्थाने भोगान् भुक्त्वा स्ववीर्यतः ।
तस्मिन् विभवहीनो यो वसेत् स पुरुषाधमः ॥

तस्य गृहे लोहघटिता पूर्वपुरुषोपार्जिता तुलाऽऽसीत् । तां च कस्यचिद्वणिजो गृहे निक्षेपभूता कृत्वा देशान्तरं प्रस्थितः । ततः सुचिरं कालं देशान्तरं भ्रान्त्वा पुनस्तदेव स्वपुरमागत्य तं श्रेष्ठिनमवदत् । भोः श्रेष्ठिन् दीयतां मे सा निक्षेपतुलेति । स आह । भो नास्ति सा त्वदीया तुला । मूषिकैर्भक्षिता । जीर्णधन आह । भोः श्रेष्ठिन्नास्ति दोषस्ते यदि मूषिकैर्भक्षिता । न किञ्चिदत्र शाश्वतमस्ति । परमहं नद्यां स्नानार्थं गमिष्यामि । तत्त्वमात्मीयं शिशुमेतं मया सह स्नानोपकरणहस्तं प्रेषयेति । सोऽपि चौर्यभयात्तस्य शङ्कितः स्वपुत्रमवदत् । वत्स पितृव्योऽयं तव स्नानार्थं नद्यां गच्छति । तद्गम्यतामनेन सार्धं स्नानोपकरणमादायेति ।

अथासौ वणिक्शिशुः स्नानोपकरणमादाय प्रहृष्टमनास्तेनाभ्यागतेन सह प्रस्थितः । तथानुष्ठिते वणिक् स्नात्वा तं शिशुं नदीगुहायां प्रक्षिप्य तद्द्वारं बृहच्छिलयाऽऽच्छाद्य सत्वरं गृहमागतः । पृष्टश्च तेन वणिजा भो अभ्यागत तत्कथ्यतां कुत्र मे शिशुर्यस्त्वया सह नदीं गत इति । स आह । नदीतटात्स श्येनेन हृत इति । श्रेष्ठ्याह मिथ्यावादिन् किं क्वचिच्छ्येनो बालं हर्तुं शक्नोति । तत्समर्पय मे सुतमन्यथा राजकुले निवेदयामीति । स आह । भोः सत्यवादिन् यथा श्येनो बालं न नयति तथा मूषिका अपि लोहभारघटितां तुलां न

भक्षयन्ति। तदर्पय मे तुलां यदि दारकेण प्रयोजनम्। एवं विवदमानौ द्वावपि राजकुलं गतौ। ततः श्रेष्ठी तारस्वरेणाभाषत। भो अब्रह्मण्य-मब्रह्मण्यम्। मम शिशुरनेन चौरेणापहृत.। अथ धर्माधिकारिणस्त-मब्रुवन्। भाः समर्प्यतां श्रेष्ठिपुत्र.। स आह। किं करोमि पश्यतोऽपि मे श्येनेनापहृतः शिशुरिति। तच्छ्रुत्वा तेऽवदन्। भो न सत्यमभिहितं भवता। किं श्येनः शिशुं हर्तुं समर्थो भवतीति। स आह। भो भोः श्रूयतां मद्वचः।

> तुलां लोहसहस्रस्य यत्र खादन्ति मूषिकाः।
> राजस्तत्र हरेच्छ्येनो बालकं नात्र संशयः॥ इति।

ततस्तेऽपृच्छन्। कथमेतदिति। तत. स सभ्यानामादितः सर्वं वृत्तान्तमचयत्। ततस्तैर्विहस्य द्वावपि तौ परस्परं सम्बोध्य तुलाशिशुदानेन सन्तोषितौ।

## टीपा

'पश्यत अपि मे'—हा षष्ठी रचना-अनादरवाचक 'मी पाहात असताना सुद्धा'

'सभ्यानाम् अचयत्'—'क्था' क्रियापदाचा उपयोग चतुर्थीबरोबर करतात येथे षष्ठी अपवाद समजावी संस्कृतमध्ये षष्ठीचा उपयोग इतर विभक्तींऐवजी करण्याचा प्रघात आहे

'तस्य शङ्कितः'—त्याला भ्यालेला पंचमीबद्दल षष्ठी योजलेली आहे

'स्नानोपकरणहस्त—स्नानस्य उपकरणानि हस्ते यस्य स' बहुव्रीहि या विग्रहामध्यें दोन्ही पदांच्या विभक्ति भिन्न आहेत म्हणून यास 'व्यधिकरण बहुव्रीहि' असें म्हणतात.

'वि+वद्'—भांडणे, वादविवाद करणें या अर्थी आत्मनेपदी असतो

'पुरुषाधम'—अधम शब्द कर्मधारयाच्या शेवटी येतो

---

## प्रश्न

१ केन कारणेन जीर्णधनो ग्रामान्तरं प्रस्थित? अस्यां कथायां क शठ वर्ण्यते? तं शठं प्रति जीर्णधनेन शाठ्य कथं प्रदर्शितम्?

२ भो श्रेष्ठिन् दीयतां मे सा निक्षेपतुला। भो बाल गम्यतामनेन सार्धं स्नानोपकरणमादाय। कथ्यतां भो अभ्यागत कुत्र मे शिशुः स्थापितस्त्वया। भो जीर्णधन समर्प्यतां श्रेष्ठिसुत। या वाक्यांचा प्रयोग बदला.

३ विवदमानौ, भ्रान्त्वा, समर्प्य, सन्तोषितौ, सम्बोध्य हीं रूपें ओळखून त्यांचा नवीन वाक्यात उपयोग करा.

४ शद्, ब्रू व ख्या या धातूंचीं प्र. भूतकाळीं रूपें लिहा.

पाठ करा —पोत पाकोऽर्भको डिम्भ पृथुक शावक शिशु ।

---

# पाठ १८

## दमयन्त्यात्मनो वृत्तमृषिभ्यः कथयति ।

---

विदर्भेषु महीपालो भीमो नाम महीपतिः ।
तस्य मां तनयां सर्वे जानीत द्विजसत्तमाः ॥ १ ॥

निषधाधिपतिर्धीमान्नलो नाम महायशाः ।
वीरः सङ्ग्रामजिद्विद्वान् मम भर्ता विशांपतिः ॥ २ ॥

देवताभ्यर्चनपरो द्विजातिजनवत्सलः ।
गोप्ता निषधवंशस्य महातेजा महाबलः ॥ ३ ॥

सत्यवान् धर्मवित् प्राज्ञः सत्यसन्धोऽरिमर्दनः ।
ब्रह्मण्यो दैवतपरः श्रीमान् परपुरञ्जयः ॥ ४ ॥

नलो नाम नृपश्रेष्ठो देवराजसमद्युतिः ।
मम भर्ता विशालाक्षः पूर्णेन्दुवदनोऽरिहा ॥ ५ ॥

आहर्ता क्रतुमुख्यानां वेदवेदाङ्गपारगः ।
सपत्नानां मृधे हन्ता रविसोमसमप्रभः ॥ ६ ॥

स कैश्चिन्निकृतिप्रज्ञैरनार्यैरकृतात्मभिः ।
देवने कुशलैर्जिह्मैर्जितो राज्यं वसूनि च ॥ ७ ॥

तस्य मामवगच्छध्वं भार्यां राजर्षभस्य वै ।
दमयन्तीति विख्यातां भर्तुर्दर्शनलालसाम् ॥ ८ ॥

सा वनानि गिरींश्चैव सरांसि सरितस्तथा ।
पल्वलानि च सर्वाणि तथारण्यानि सर्वशः ॥ ९ ॥

अन्विष्यन्ती स्वभर्तारं नलं रणविशारदम् ।
महात्मानं कृतास्त्रं च विचरामीह दुःखिता ॥ १० ॥

कच्चिद्भगवतां रम्यं तपोवनमिदं नृपः ।
भवेत् प्राप्तो नलो नाम निषधानां जनाधिपः ॥ ११ ॥

यत्कृतेऽहमिदं दुःखं प्रपन्ना भृशदारुणम् ।
वनं प्रतिभयं घोरं शार्दूलमृगसेवितम् ॥ १२ ॥

## टीपा

'विदर्भाः-निषधाः'—देशांचीं नावें लोकांच्या नावापासून बनविलेलीं असल्यास तीं बहुवचनात योजतात. 'देश किंवा विषय' हा शब्द जोडला म्हणजे एकवचनात योजता येतात.

'अवगच्छध्वम्'—अव+गम्-जाणणें, ओळखणें या १ प ९ धातूचें अपवाद म्हणून आज्ञार्थी द्वि पु बहुवचनी रूप आहे. योग्य रूप—'अवगच्छत' हें आहे.

'कच्चित्' या अव्ययाचा उपयोग साधा प्रश्न विचारण्याकरितां करितात व त्या प्रश्नाच्या स्वरूपावरून प्रश्नाचें होय किंवा नाहीं हें उत्तर ध्वनित होतें.

---

## प्रश्न

१ दमयन्त्या कथितं वृत्तं गद्यरूपेण कथयत ।

२ नलाबद्दल योजलेली सर्व विशेषणें सांगून त्यांचा अर्थ स्पष्ट करा व त्यांतील समानार्थक कोणती आहेत हेंहि सांगा.

३ राज्यनाश होणें हा नलाचा दोष नसून इतरांचा आहे हें दर्शविणाऱ्या श्लोकाचा अर्थ करा.

४ पुढील शब्दसमूहांबद्दल समास लिहा —धर्मं वेत्ति असौ । सत्या वाचा यस्य सः । महान् आत्मा यस्य सः । तपसः वनम् । महत् यशः यस्य सः । शत्रून् जयति असौ ।

पाठ करा—शूरो वीरश्च विख्यातो नेता निषधनिवृत्ते ।
सोऽयुर्गानी रणे साधु दमयन्तीवादयस्थितु ॥

---

# पाठ १९

## शिबिपरीक्षा ।

पुरोशीनरो नाम राजा यमुनायास्तीरे यज्ञमतनोत् । तेन यज्ञेन स वासवादप्यत्यरिच्यत । अतस्तत्रैवाग्निरिन्द्रश्च तस्य माहात्म्यं ज्ञातुं प्रवर्तमाने यज्ञे । इन्द्रः श्येनरूपमधारयत् तथाचाग्निः कपोतरूपम् । श्येनभयाच्छरणार्थी कपोतो भयपीडित आत्मानं त्रातुं राज्ञ ऊरुं प्राप्य तत्र निलीनोऽभवत् । तद् दृष्ट्वा श्येनो राजानमवदत् । हे राजन् अस्य कपोतस्य रक्षणं कृत्वा किमर्थं त्वं धर्मविरुद्धं कर्माचरसि । एष कपोतो क्षुधा पीड्यमानस्य मे भक्षणं भवतीति । तदा राजा प्रत्यवदत् । अयं द्विजः सन्त्रस्तरूपस्त्राणार्थी त्वत्तो भीतः प्राणगृध्नुरभयार्थं मत्समीपं प्राप्तः । अतोऽस्याभयार्थिनो रक्षणं ममावश्यकर्तव्यतामापततीति । एतच्छ्रुत्वा श्येन आह । हे विशांपते अस्मात् भक्ष्याद्विलोपितस्य मम प्राणा नश्यन्ति । मयि नष्टे मत्कुटुम्बमपि नश्येत् । एवं त्वमेकस्य प्राणान् रक्षित्वा बहुप्राणघातं करोषि । अप्येतद् धर्म्यं भवेदिति ।

एतद्वचनं निशम्य राजाऽभाषत । हे विहगोत्तम त्वं बहुकल्याणसंयुक्तं भाषसे । किन्तु कथं त्वं शरणार्थिपरित्यागं साध्विति मन्यसे । भवतु नाहं तव भक्ष्यविलोपं करोमि । यत्किञ्चिदन्यद् भक्ष्यं वाञ्छसि तदेवाहं तुभ्यं ददामीति । नाहं कपोतादन्यत्किञ्चिदत्तुं काङ्क्षे । यतो मे दैवविहितं भक्ष्यं कपोतोऽस्तीति श्येनेनाभिहितम् । तदा राजावदत् कपोतप्राणान् विना यदन्यत्त्वं कामयसे तत्सर्वमहं तुभ्यं ददानि न तु कथञ्चिदपि कपोतमिति । तदा श्येनोऽवदत् । भवतु हे नृपोत्तम कपोतेन समं तव मांसं त्वया प्रदेयम् । तेन मे तुष्टिर्भवेदिति ।

इन्द्रोऽहमस्मि धर्मज्ञ कपोतो हव्यवाडयम् ।
जिज्ञासमानौ धर्मे त्वां यज्ञवाटमुपागतौ ॥
यावल्लोके मनुष्यास्त्वां कथयिष्यन्ति पार्थिव ।
तावत्कीर्तिश्च लोकाश्च स्थास्यन्ति तव शाश्वताः ॥ इति ।

एतदुक्त्वा तुष्टमानसौ तौ इन्द्राग्नी त्रिविष्टपं गतौ । उशीनरोऽपि विभ्राजमानो वपुषा त्रिविष्टपमारोहत् ।

### टीपा

'अति + रिच्—वरचढ असणें' या क्रियापदाचा उपयोग ज्याच्याहून वरचढ असा अर्थ दर्शवावयाचा असेल त्याची पंचमी विभक्ति योजून करतात

'अवश्यकर्तव्यताम् आप'—निकडीचें कर्तव्य असणें.

'जिज्ञासमानौ—जाणण्याची इच्छा करणारे (दोघे)' ज्ञा धातूचें इच्छार्थक रूप. धातु. विशेषण पु. प्र. द्विवचन.

---

### प्रश्न

१ इन्द्र स्वतः शिबिपरीक्षेची गोष्ट सांगत आहे असें कल्पून ही गोष्ट संस्कृतमध्यें सांगा

२ पाल्यमानस्य, उत्कृत्य, प्रदेयम्, विभ्राजमान ही रूपें पूर्णपणें ओळखून त्यांचा वाक्यांत उपयोग करा.

३ भयपीडित , भक्ष्यविलोप , दैवविहितम्, तुष्टमानसौ, इन्द्राग्नी, श्येनभयम् हे समास सोडवून त्यांचीं नावें सांगा.

४ जसें शरणम् अर्थयते असौ शरणार्थिन्, तसेंच — — — त्राणार्थिन्, —— —— —— अभयार्थिन्. रिकाम्या जागीं योग्य शब्द लिहा.

५ उर्वशी (लक्ष्मी) अत्यरिच्यत सौन्दर्येण । सत्य (सत्कर्मन्) अतिरिच्यते । कंसांतील शब्दांचीं योग्य रूपें योजा.

पाठ करा —स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः ।
सुरलोको द्योदिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम् ॥

---

# पाठ २०

## दारिद्र्यदोषाः ।

एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ।
उक्तं न सम्यक्कविना हि तेन दारिद्र्यदोषो गुणराशिनाशी ॥ १ ॥

धनैर्विमुक्तस्य नरस्य लोके किं जीवितेनादित एव तावत् ।
यस्य प्रतीकारनिरर्थकत्वात् कोपप्रसादा विफलीभवन्ति ॥ २ ॥

अहो नु कष्टं सततप्रवासस्ततोऽतिकष्टः परगेहवासः ।
कष्टाधिका नीचजनस्य सेवा ततोऽतिकष्टा धनहीनता च ॥ ३ ॥

वरं वनं व्याघ्रगजेन्द्रसेवितं द्रुमालयः पत्रफलाम्बुभोजनम् ।
तृणानि शय्या वसनं च वल्कलं न बन्धुमध्ये धनहीनजीवितम् ॥ ४ ॥

यदा तु भाग्यक्षयपीडितां दशां नरः कृतान्तोपहितां प्रपद्यते ।
तदास्य मित्राण्यपि यान्त्यमित्रतां चिरानुरक्तोऽपि विरज्यते जनः ५

दारिद्र्यान्मरणाद्वा मरणं मे रोचते न दारिद्र्यम् ।
अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ॥ ६ ॥

### टीपा

'वरं–न' (ही गोष्ट) पुरवली, (पण ती) नको—जी गोष्ट पसंत असेल त्या अर्थाच्या वाक्याबरोबर 'वरम्' हें अव्यय योजतात व जी गोष्ट नको त्या अर्थाच्या वाक्याबरोबर 'न–न तु' हीं अव्ययें योजतात. 'वर व न' यांशीं संबंध असणारे शब्द प्रथमेंत असावे लागतील यावें म्हणावें, तुलना हें योजू नयेत.

---

### प्रश्न

१ प्रथमश्लोके प्रयुक्तामुपमां स्पष्टीकुरुत ।
२ निर्धनानां कोपप्रसादा निरर्थकाः केन कारणेन भवन्ति ?

३ कानि कानि वस्तूनि नरस्य कष्टकारकाणि भवन्ति ?
४ वनवासवृत्तिः कीदृशी भवति तद्वर्णयत ।
५ दारिद्र्यस्य दोषान्कथयत ।
६ केन कारणेन दारिद्र्यान्मरणं वरम् ।
पाठ करो —नि स्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि स ।

---

## पाठ २१

### "उपायं चिन्तयन् प्राज्ञो ह्यपायमपि चिन्तयेत्" ।

---

कस्मिंश्चिद्देशे धर्मबुद्धिः पापबुद्धिश्च द्वे मित्रे प्रतिवसतः । अथ कदाचित्पापबुद्धिना चिन्तितं यदहं तावन्मूर्खो दरिद्रश्च । तदेनं धर्मबुद्धिमादाय देशान्तरं गत्वास्याश्रयेणार्थोपार्जनं कृत्वैनमपि वञ्चयित्वा सुखी भवामीति । अथान्यस्मिन्नहनि पापबुद्धिर्धर्मबुद्धिमाह । भो मित्र शास्त्रेष्वेवं वर्णितं यद् येन देशान्तरेषु बहुविधभाषावेषादि न ज्ञातं तस्य जन्म धरणीपीठे निरर्थकम् । अत आवां देशान्तरं गच्छावेति । अथ तद्वचनमाकर्ण्य प्रहृष्टमनास्तेनैव सह गुरुजनानुज्ञातः शुभेऽहनि धर्मबुद्धिः प्रस्थितः । तत्र च धर्मबुद्धिप्रभावेण भ्रमता पापबुद्धिना प्रभूततरं वित्तमासादितम् । ततश्च तौ द्वावपि प्रभूतोपार्जितवित्तौ प्रहृष्टौ स्वगृहं प्रत्यौत्सुक्येन प्रस्थितौ । अथ स्वस्थानसमीपवर्तिना पापबुद्धिना धर्मबुद्धिरभिहितः । भद्र न सर्वमेतद्धनं गृहं प्रति नेतुं युज्यते यतः कुटुम्बिनो बान्धवाश्च तत्प्रार्थयेरन् । तदत्रैव वनगहने क्वापि भूमौ निक्षिप्य किञ्चिन्मात्रमादाय गृहं प्रविशावो भूयोऽपि प्रयोजने सञ्जाते तन्मात्रमस्मात् स्थानान्नयेव । उक्तं च—

न वित्तं दर्शयेत्प्राज्ञः कस्यचित्स्वल्पमप्यहो ।
मुनेरपि यतस्तस्य दर्शनाच्चलते मनः ॥
यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि ।
आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान् ॥

तदाकर्ण्य धर्मबुद्धिराह । भद्र एवं क्रियतामिति । तथानुष्ठिते द्वावपि स्वगृहं गत्वा सुखेन स्थितौ । किन्तु पापबुद्धिर्निशीथे तत्रागत्य सर्वं वित्तमादाय गर्तां पूरयित्वा स्वभवनमयात् । अथान्येद्युर्धर्मबुद्धिं समेत्याब्रवीत् । सखे बहुकुटुम्बा वयं वित्ताभावात् सीदामः । तद्गत्वा ततः स्थानात्किञ्चिद्वित्तमानयाव इति । सोऽब्रवीत् । भद्र एवं क्रियतामिति । अथ द्वावपि गत्वा यावत्स्थानं खनतस्तावद्रिक्तभाण्डं दृष्टवन्तौ । अत्रान्तरे पापबुद्धिः शिरस्ताडयन्नभाषत । भो धर्मबुद्धे त्वया हृतमेतद्धनं नान्येन यतो भूयोऽपि गर्तापूरणं कृतम् । तत्प्रयच्छ मे तस्यार्धमिति । स आह भो दुरात्मन् मैवं वद । धर्मबुद्धिः खल्वहम् । नैतच्चौरकर्म करोमीति । एवं तौ विवदमानौ धर्माधिकारिणं गत्वा तस्मै सकलं वृत्तं न्यवेदयताम् । अथ धर्माधिकरणाधिष्ठितपुरुषैर्यावत्तौ दिव्यार्थं नियोजितौ तावत् पापबुद्धिराह । अहो न सम्यग्दृष्टो न्यायः । उक्तं च—

विवादेऽन्विष्यते पत्रं पत्राभावे तु साक्षिणः ।
साक्ष्यभावात्ततो दिव्यं प्रवदन्ति मनीषिणः ॥

अत्र विषये वृक्षदेवता मम साक्षिभूताः सन्ति । तत्ता एवावयो-रेकतरं चौरं साधुं वा सनिश्चयं घोषयन्तीति । अथ तैः सर्वैरभिहितम् । भो युक्तमुक्तं भवता । तदस्माकमप्यत्र विषये कौतूहलमस्ति । तत्प्रत्यूषसमये द्वाभ्यामस्माभिः सह वनोद्देशं गन्तव्यमिति । अथ पापबुद्धिः स्वगृहं गत्वा स्वजनकमवदत् । तात प्रभूतोऽयं मयार्थो धर्मबुद्धेश्चोरितः । अतो यदि भवांस्तद्वृक्षकोटर-मधिष्ठाय वृक्षदेवतावद्वाचेत्तर्ह्येतद्द्रव्यं रक्षितं भवेत् । अन्यथा तन्मम प्राणैः सह नाशं गच्छेदिति । तस्य धनलुब्धः पिता तथा

कर्तुमन्वमन्यत। अतो रात्रावेव वनं गत्वा स तस्य वृक्षस्य कोटर-मध्यास्त। प्रत्यूषे पापबुद्धिः स्नात्वा धर्मबुद्धिपुरःसरो राजपुरुषैः सह तं वृक्षमभ्येत्य तारस्वरेणाह—

आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मोऽपि जानाति नरस्य वृत्तम्॥

तदकथयत वनदेवता आवयोरयं चौर इति। अथ पापबुद्धिपिता शमीकोटरस्थोऽवदत्। भो धर्मबुद्धिना हृतमेतद्धनमिति। तदाकर्ण्य सर्वे राजपुरुषा विस्मयोत्फुल्ललोचना यावद्धर्मबुद्धेर्धनहरणोचितं निग्रहं शास्त्रदृष्ट्यावलोकयन्ति तावद्धर्मबुद्धिना तत्कोटरं वह्निभोज्य-द्रव्यैः परिवार्य वह्निना सन्दीपितम्। अथ ज्वलति तस्मिन् कोटरेऽर्धदग्धशरीरः पापबुद्धिपिता करुणं परिदेवयन् बहिर्निष्क्रान्तः। ततस्तैः पृष्टं सर्वं पापबुद्धिचेष्टितं न्यवेदयत्। अथ ते राजपुरुषाः पापबुद्धिं दृढं बद्ध्वा कारागृहे न्यक्षिपन्।

## टीपा

' बहुविधभाषावेषादि —भाषा च वेषा च भाषावेषा। बहुविधा भाषावेषा बहुविध भाषावेषा। बहुविधभाषावेषा आदि यस्य तद् बहुविधभाषावेषादि। बहुव्रीहि.

' चलते '—हें चल् या १ प. पदी धातूचें आत्मनेपदी रूप अपवादात्मक समजावें

' अधि+स्था—आस ' याचा उपयोग करताना स्थलवाचक शब्दाची द्वितीया योजतात

---

## प्रश्न

१ अस्या कथाया अभिधानं कथं सार्थं वर्तते तत्कथयत।

२ धर्मबुद्धिना कथं चातुर्यं दर्शितं तत्स्पष्टं कुरुत।

३ विग्रह करून नावें सांगा—देशान्तरम्, प्रभूतोपार्जितवित्तौ, धर्माधिकरणाधिष्ठितपुरुषैः, धनलुब्ध, विस्मयोत्फुल्ललोचना, अर्धदग्धशरीर।

४ रूप ओळखा—आसादितम्, दृष्टवन्तौ, अधिष्ठाय, अभ्येत्य, परिवार्य, निष्क्रान्त।

५ पहिल्या पाच ओळी संधि सोडवून लिहा.

६ या पाठांतील अन्वयें सांगून त्याचा अर्थ सांगा.

पाठ करा:—द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु ।
हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि ॥

---

# पाठ २२

## रामस्य वनगमनम् ।

रामः—वत्स लक्ष्मण किमाज्ञापयति मध्यमा मातानेन कार्यलेखेन ।

लक्ष्मणः—आर्य वाचयामि तमहम् ।
अस्त्येकेन वरेण वत्स भरतो भोक्ताधिराज्यस्य मे
वात्सल्येन विहाय कालहरणं रामो वनं दण्डकाम् ।
तस्यां चीरधरश्चतुर्दशसमास्तिष्ठत्वसौ तं पुनः ।
सीतालक्ष्मणमात्रकात् परिजनादन्यो न चानुव्रजेत् ॥

रामः—अहो प्रसादोत्कर्षः ।
तत्रैव गमनादेशो यत्र पर्युत्सुकं मनः ।
न चेष्टविरहो जातः स च वत्सोऽनुजोऽनुगः ॥

लक्ष्मणः—दिष्ट्यानुमोदितोऽहमार्येण । धिक्कष्टमार्यया सीतयापि गन्तव्यम् । अये युधाजिदार्यभरतसहचरस्तात-मुपसर्पति ।

( युधाजिद्भरतौ प्रविशत. )

युधाजित्—रामभद्र अवेक्षस्व पादपरिचारकमरण्यानुगतं भरतम् ।

रामः—नन्वस्यापि वर्णाश्रमरक्षणे गुरुर्नियोगः ।

भरतः—लक्ष्मणस्य शत्रुघ्नस्य वा तद्वत् ।

रामः—किमत्र कस्यचित्स्वरुचिः ।

भरतः—एतावत्येव मे स्वरुचिः ।

रामः—शक्यं नाम मयि तिष्ठति त्वयान्येन वा पितृनियुक्तमुल्लङ्घयितुम् ।

भरतः—हा कथं परित्यक्तोऽस्मि मन्दभाग्यः ।

युधाजित्—वत्स समाश्वसिहि, समाश्वसिहि ।

भरतः—मातुल उद्धर माम् ।

युधाजित्—वत्स एवं तावत् (इति भरतस्य कर्णे कथयित्वा) । रामभद्र एषमयं विज्ञापयति—यदेतद्भगवता शरभङ्गेण प्रेषितं तपनीयोपानद्युगलं तदार्यः प्रसादीकरोत्विति ।

रामः—(तदुन्मुच्य) गृहाणैतद्वत्स ।

भरतः—(शिरस्यारोप्य) हा आर्य ।

रामः—(परिष्वज्य) वत्स मत्पादस्पृष्टिकया प्रतिनिवर्तस्व ।

भरतः—अयमहमिदानीम्

नन्दिग्रामे जटा बिभ्रद्बिभिविष्यार्यपादुके ।
पालयिष्यामि पृथिवीं यावदार्यो निवर्तते ॥

(इति सीतारामौ प्रदक्षिणीकरोति)

युधाजित्—वत्स रामभद्र अनुगच्छाम्यहं वः ।

रामः—मातुल मातुल प्रतिनिवर्तस्व । अयं च वो हस्ते भरतः ।

युधाजित्—वत्स अनुरुध्यस्व मामनुगच्छन्तम् ।

रामः—शान्तं पापं शान्तं पापम् । गुरवो हि यूयमनुगन्तव्या नानुगन्तारः । आत्मनातृतीयेन मया गन्तव्यमित्यस्वादेशः ।

युधाजित्—किमहमेकोऽनुगच्छामि । अपि तु सबालवृद्धाः प्रकृतयः । किं न पश्यसि ।

रामः—मातुल मातुल गुरुभिरेव दिशावो धर्मलोपात्पालयितव्याः। तत्प्रसीद नः। प्रतिनिवर्त्यतामयं महाजनः। (इति प्रणमति)

युधाजित्—वत्स उत्तिष्ठोत्तिष्ठ। बोधयित्वा प्रजाः क्वापि मन्दभाग्यो गच्छामि।

त्वां लक्ष्मण महाबाहो त्वां च वैदेहनन्दिनि।
आमन्त्रये निवृत्तोऽस्मि पापः कल्याणमस्तु वाम्॥

(इति सर्वे निष्क्रामन्ति)

४ या उताऱ्यातील वर्तमानकालवाचक धातु-विशेषणे दर्शवून त्यांचा प्रत्येक ठिकाणी कसा उपयोग केला आहे हे स्पष्ट करा.

५ समास सोडवून नांवें द्याः—गुरुनियोगः, पितृनियुक्तम्, मन्दभाग्य, शास्त्रवृद्धाः, अभ्यादेशः ।

पाठ करा:—समानोदर्यसोदर्यसगर्भ्यसहजाः समाः ।
सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः ॥

---

# पाठ २३

## त्रिशङ्कुकथा ( प्रथमो भाग ) ।

सत्यवादी जितेन्द्रिय इक्ष्वाकुकुलवर्धनस्त्रिशङ्कुरिति विख्यातो राजामन्यत देवतानां परां गतिं स्वशरीरेण यायामिति । अतः स न्यवेदयत्स्वमनोरथं कुलगुरवे वसिष्ठाय । किन्तु वसिष्ठेन तदशक्यमित्युपादिष्टम् । अतः स वसिष्ठपुत्रान् गत्वा तानब्रवीत् ।

गुरुपुत्रानहं सर्वान्नमस्कृत्य प्रसादये ।
शिरसा प्रणतो याचे ब्राह्मणांस्तपसि स्थितान् ॥
ते मां भवन्तः सिद्ध्यर्थं याजयन्तु समाहिताः ।
सशरीरो यथाहं वै देवलोकमवाप्नुयाम् ॥
प्रत्याख्यातो वसिष्ठेन गतिमन्यां तपोधनाः ।
गुरुपुत्रानृते सर्वान्नाहं पश्यामि कञ्चन ॥ इति ।

एतत्त्रिशङ्कोः क्रोधसमन्वितं वचः श्रुत्वा ते वसिष्ठपुत्रा अब्रुवन् । यत्पुरोधसा वसिष्ठेनाशक्यमिति कथितं तत्कथं वयं साधयितुं शक्नुयाम । अत इमं बालिशं विचारं विहाय स्वपुरं पुनर्गम्यतामिति । अनेन प्रतिवचनेन प्रक्षुब्धस्त्रिशङ्कुरवदत् । अन्यां गतिं

गच्छामि स्वस्ति वोऽस्तु तपोधना इति। एतद्वाक्यं श्रुत्वा सङ्क्रुद्धा ऋषिपुत्रास्तं चण्डालो भविष्यसीत्यशपन्। तेन शापेन चण्डालतां गतः स राजा। तस्य तादृशीमवस्थां दृष्ट्वा सर्वेऽनुयायिनस्तमजहुः। अत एक एव स विश्वामित्रं तपोधनमयात्। चण्डालरूपिणं तं दृष्ट्वा स मुनिस्तस्यादृयत निमागमनकार्यं त इत्यन्वयुङ्क्त। तदा स त्रिशङ्कुरेवमब्रवीत्।

प्रत्याख्यातोऽस्मि गुरुणा गुरुपुत्रैस्तथैव च।
अनवाप्यैव तं कामं मया प्राप्तो विपर्ययः॥
सशरीरो दिवं यायामिति मे सौम्यदर्शन।
मया चेष्टं क्रतुशतं तच्च नावाप्यते फलम्॥
धर्मं प्रयतमानस्य यज्ञं चाहर्तुमिच्छतः।
परितोषं न गच्छन्ति गुरवो मुनिपुङ्गव॥
तस्य मे परमार्तस्य प्रसादमभिकाङ्क्षतः।
कर्तुमर्हसि भद्रं ते दैवोपहतकर्मणः॥
नान्यां गतिं प्रपद्यामि नान्यच्छरणमस्ति मे।
दैवं पुरुषकारेण निवर्तयितुमर्हसि॥ इति।

एतन्निशम्य कुशिकात्मजश्चण्डालतां गताय राज्ञे स्वागतं व्याहृत्याब्रवीत्। अहं तेऽभयं ददामि। अहं पुण्यकर्मणः सर्वानृषीनाहूय त्वां याजयामि येन सशरीरस्त्वं स्वर्गं गच्छसीति।

## टीपा

'अशपन्—शापदिला' (गा १ प प) धातूचें प्र भूत तृ पु बहुवचन

'दय् (१ आ प)—दया करणें' याचा उपयोग ज्याच्यावर दया करावयाची त्याची षष्ठी योजून करतात

'गुरुपुत्रैः च'—'च—शिवाय' या अव्ययाचा उपयोग बहुधा पश्चाद्वर्ती नामानंतर करतात क्वचित् द्वितीयाच्या नामाचाहि उपयोग करतात

'स्वस्ति—कल्याण असो'—या अव्ययाचा उपयोग चतुर्थ्यन्त नामाबरोबर करतात

### प्रश्न

१ किमर्थमृषिपुत्रास्त्रिशङ्कुमशपन् ? विश्वामित्र किमर्थं तस्मै स्वागतं व्याहरत् ?

२ अहं सर्वान् प्रसादये । भवन्तो मा याजयन्तु । भवान् दैवं पुरुषकारेण निवर्तयतु । या प्रयोजक वाक्यांचीं मूळ वाक्यें सांगा. जसें—'सेनापतिः सैनिकान् स्थापयति ' याचें ' सैनिकास्तिष्ठन्ति ' ।

३ यायाम्, अवाप्नुयाम्, अब्रुवन्, यास्तुयाम, अन्वयुङ्क्त हीं रूपें पूर्णपणें ओळखून त्यांतील धातूंचीं प्र भूतकाळा व आज्ञार्थी रूपें सांगा

४ अनुचर, अभीच्छन्, मुनि विना, त्यक्त्वा, अगच्छत्, अपृच्छत्, यज्ञशतम् या शब्दांना वरील पाठांतील समानार्थक शब्द सांगा.

५ समासांचा विग्रह करून नावें सांगा —सत्यवादी, जितेन्द्रिय, दैवोपहतशर्मा, पुण्यकर्माण, सशरीर ।

पाठ करा —दैव दिष्ट भागधेय भाग्य स्त्री नियतिर्विधिः ।

---

## पाठ २४

### त्रिशङ्कुकथा (द्वितीयो भाग ) ।

विश्वामित्रः स्वपुत्रानाहूयाब्रवीत् । ममाज्ञया सवासिष्ठान् सर्वानृषीनानयत यज्ञार्थमिति । अतस्ते पुत्रा सर्वांनृषीनभिमन्त्र्य न्यवर्तन्त । ते पितरमब्रुवन् समहोदयान्वासिष्ठान्विना सर्व आयान्ति । समहोदयैर्वासिष्ठैरुक्तम् ।

क्षत्रियो याजको यस्य चाण्डालस्य विशेषतः ।
कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः ॥ इति ।

एतद्वचः श्रुत्वा वासिष्ठाः श्वमांसनियताहारा विरूपा भवन्तु महोदयश्च निषादत्वं यात्विल्यशपद्विश्वामित्रः । पश्चान्महातेजा

विश्वामित्रः सर्वेभ्य ऋषिभ्यस्त्रिशङ्कोरिच्छां न्यवेदयत् । भवद्भिर्मया सह यज्ञः प्रवर्त्यतामित्याह । अयं भगवान्विश्वामित्रोऽग्निकल्पः शपेदिति भयेन तेऽवदन् ।

> क्रियतां च तथा यत्नः सशरीरो यथा दिवम् ।
> गच्छेदिक्ष्वाकुदायादो विश्वामित्रस्य तेजसा ॥ इति ।

एवं सर्वसम्भारसम्भृतो यज्ञः प्रवृत्तः । महातेजा विश्वामित्रो याजक आसीत् । सर्वे ऋत्विजो यथाकल्पं यथाविधि सर्वाणि कर्माण्यकुर्वन् । किन्तु यदा देवता हविर्भागार्थमाहूतास्तदा ता नागच्छन् । अतः कोपसमाविष्टो विश्वामित्रः स्रुवमुद्यम्य त्रिशङ्कुमब्रवीत्पश्य मे तपसो वीर्यं स्वार्जितस्य नरेश्वर । स्वशरीरेण च दुष्प्रापं स्वर्गं गच्छेति । एवमुक्तवति तस्मिन्पश्यतां मुनीनां त्रिशङ्कुर्दिवमारोहत् । तं स्वर्गं प्रविशन्तं दृष्ट्वा सर्वैः सुरगणैः सह मघवोक्तवान् ।

> त्रिशङ्को गच्छ भूयस्त्वं नासि स्वर्गकृतालयः ।
> गुरुशापहतो मूढ पत भूमिमवाक्शिराः ॥

अतः पुनस्त्रिशङ्कुरधः पतन्पाहि मामिति विश्वामित्रं प्रार्थयत । तद्वचनं श्रुत्वा सङ्क्रुद्धो विश्वामित्रस्तं तिष्ठ तिष्ठेत्यब्रवीत् । स्वयं चापरां सृष्टिं निर्मातुमुपाक्रमत । ततः परमसम्भ्रान्ताः सर्षिसङ्घाः सुरासुराः सानुनयमवदन् गुरुशापपरिक्षतोऽयं सशरीरो दिवं यातु नार्हति । तदा विश्वामित्रोऽब्रवीदस्य त्रिशङ्कोरारोहणं मया प्रतिज्ञातम् । तदन्यथा भवितुं नार्हति ।

> स्वर्गोऽस्तु सशरीरस्य त्रिशङ्कोरस्य शाश्वतः ।
> नक्षत्राणि च सर्वाणि मामकानि ध्रुवाण्यथ ॥
> यावल्लोका धरिष्यन्ति तिष्ठन्त्वेतानि सर्वशः ।
> मत्कृतानि सुराः सर्वे तदनुज्ञातुमर्हथ ॥

एतच्छ्रुत्वा सर्वैर्देवैस्तथास्त्वित्युक्तम् । एवं वैश्वानरस्य पथो बहिरवाक्शिरास्त्रिशङ्कुरमरसन्निभो दिवि स्थितः ।

## टीपा

'अग्निवत्स -अग्नीसारखा ' 'वत्' हा शब्द 'सारखा' या अर्थी नामाला जोडतात व तो शब्द विशेषण होतो.

'भवद्भिः यज्ञ प्रवर्त्यताम्' (प्रयोजक कर्मणि प्रयोग)। भवन्त यज्ञ प्रवर्तयन्तु (प्रयोजक कर्तरि प्रयोग)। यज्ञ प्रवर्तताम् (मूळ कर्तरि प्रयोग)

---

## प्रश्न

१ किमर्थं वासिष्ठा विश्वामित्रस्य यज्ञार्थं नागता ? अन्य ऋषय केन कारणेन यज्ञ कर्तुमुद्यता अभवन् ? हविर्ग्रहणाय देवा किमर्थं नागच्छन् ? अथ पतन्त त्रिशङ्कु दृष्ट्वा विश्वामित्रेण किं कृतम् ? किमर्थं त्रिशङ्कुरन्तराल एव स्थित ?

२ समास सोडवून नावें सांगा —समहोदया, यथाकल्पम्, स्वर्गकृतालय, अवाक्शिरा, सर्पिसद्म, अमरसन्निभ ।

३ दिवि, पथ, सुखम्, मघवा हा रूपें ओळखून हे शब्द पूर्णपणें चालवा

४ या पाठात एकाच वाक्यात 'सति सप्तमी' व 'सति षष्ठी' या दोन्ही रचना आल्या आहेत ते वाक्य दर्शवून त्यांचा उपयोग स्पष्ट करा

पाठ करा —अध्वर्युब्रह्महोतारो यजु सामर्ग्विद क्रमात् ।
आग्नीध्राद्या धनेवांशो ऋत्विजो यजमानश्च स ॥

---

# पाठ २५

## मन्दाकिनीवर्णनम् ।

चित्रकूटाद्विनिष्क्रम्य मैथिलीं कोसलेश्वर. । ( राम )
अदर्शयच्छुभजला रम्या मन्दाकिनीं नदीम् ॥ १ ॥
अब्रवीच्च वरारोहा चारुचन्द्रनिभाननाम् ।
विदेहराजस्य सुता रामो राजीवलोचन. ॥ २ ॥

नानाविधैस्तीररुहैर्वृतां पुष्पफलद्रुमैः ।
राजन्तीं राजराजस्य नलिनीमिव सर्वतः ॥ ३ ॥ ( कुबेरस्य )

विचित्रपुलिनां रम्यां हंससारससेविताम् ।
कमलैरुपसम्पन्नां पश्य मन्दाकिनीं नदीम् ॥ ४ ॥

मृगयूथनिपीतानि कलुषाम्भांसि साम्प्रतम् ।
तीर्थानि रमणीयानि मैथिलि प्रतिभान्ति मे ॥ ५ ॥

जटाजिनधराः काले वल्कलोत्तरवाससः ।
ऋषयस्त्ववगाहन्ते नदीं मन्दाकिनीं प्रिये ॥ ६ ॥

आदित्यमुपतिष्ठन्ते नियतमूर्ध्वबाहवः ।
एते परे विशालाक्षि मुनयः शंसितव्रताः ॥ ७ ॥

क्वचिन्मणिनिकाशोदां क्वचित्पुलिनशालिनीम् ।
क्वचित्सिद्धजनाकीर्णां पश्य मन्दाकिनीं नदीम् ॥ ८ ॥

सखीवच्च विगाहस्व सीते मन्दाकिनीं नदीम् ।
कमलान्यवमज्जन्ती पुष्कराणि च भामिनि ॥ ९ ॥

उपस्पृशंस्त्रिषवणं मधुमूलफलाशनः। ( स्नानं कुर्वन् ) ( त्रि सन्ध्यम् )
नायोध्यायै न राज्याय स्पृहयेऽद्य त्वया सह ॥ १० ॥

इमां हि रम्यां मृगयूथशालिनीं निपीततोयां गजसिंहवानरैः ।
सुपुष्पितैः पुष्पधरैरलङ्कृतां न सोऽस्ति यः स्यान्न गतक्लमः सुखी ॥

## टीपा

'मणिनिकाशोदां—मणिना निकाशं उदकं यस्याः सा'। 'उदक्' शब्दाचें समासाचे शेवटीं 'उद्' असें रूप होतें.

चारुचन्द्रनिभानना—चारुः चन्द्रः तेन निभम् आननं यस्याः सा—सुंदर चन्द्राप्रमाणें जिचें तोंड आहे अशी

विदेहराज—'विदेहानां राजा'—देशाचीं नांवें लोकांच्या नांवांपासून पडलीं असल्यास बहुवचनांत योजतात. 'राजन्' शब्द तत्पुरुष समासाच्या शेवटीं 'राज' होतो.

'क्वचित्-क्वचित'—एकीकडे-दुसरीकडे या अर्थी 'क्वचित्' शब्द पुन्हा पुन्हा योजला जातो.

'अवमज्जती—खालीं पाण्यात बुडवणारी-दाबणारी.' मूळ धातु 'अव+मस्ज्.' सं. धातु. विशेषणाचा उपयोग प्रयोजकाच्या अर्थी केलेला आहे.

'त्रिषवणम्-त्रयाणां सवनानां समाहारः—तीन संधिकालाच्या वेळीं' द्विगु समास अव्ययार्थी.

'विशालाक्षी—विशाले अक्षिणी यस्याः सा.' 'अक्षि' शब्दाचें बहुव्रीहि समासाच्या शेवटीं 'अक्ष' असें रूप होतें व त्याला 'ई' जोडून स्त्रीलिंगी रूप होतें.

---

प्रश्न

१ मन्दाकिनीमुद्दिश्य प्रयुक्तानि विशेषणानि लिखित्वा तेषामर्थं विशदीकुरुत।

२ अधोलिखितानां विशेषणानामर्थं विशदं कुरुत —
राजीवलोचनः। ऊर्ध्वबाहवः। सिद्धजनाकीर्णा। कलुषाम्भासि। कोसलेश्वरः। पुलिनशालिनी। शंसितव्रताः।

३ मन्दाकिनीवर्णनं कुरुत। मन्दाकिनीजलस्य कः परिणामो भवति द्रष्टुर्मनसि? अनेन वर्णनवाचनेन पठितुश्चित्तवृत्तिः कीदृशी भवति?

पाठ करा:—मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिका।

---

# पाठ २६

## सुन्दोपसुन्दौ।

हिरण्यकशिपोर्निकुम्भो नामाभवद्बलवान् पुत्रः। तस्य च पुत्रौ दैत्येन्द्रौ सुन्दोपसुन्दनामानौ नित्यमवर्तेतां समसुखदुःखौ। त्रैलोक्यं विजेतुं निश्चित्य विन्ध्यपर्वतं गत्वा तप्तं ताभ्यामुग्रं तपः। तौ जटावल्कलधारिणौ आत्ममांसानि जुह्वतौ दीर्घकालं धृतव्रतौ स्थितौ।

तयोस्तपःप्रभावेण चिरं प्रतापितो विन्ध्योऽमुञ्चद्धूमम्। तयोस्तपो दृष्ट्वा भयं गता देवास्तपोभङ्गाय विविधानुपायानकुर्वन्। किन्तु तौ व्रतभङ्गं न कृतवन्तौ। एतद् दृष्ट्वा सर्वलोकहितः पितामहः साक्षादसुरौ गत्वावदत्। वरं वृणाथामिति। तदा ताभ्यामेष वरः प्रार्थितः। त्रिलोक्यामन्योन्यं विना कस्मादपि वां भयं नास्त्विति। इमं वरं दत्त्वा पितामहस्तौ तपसो निवर्त्य ब्रह्मलोकं गतः।

लब्धवरौ तौ यथेच्छं सुखमन्वभवताम्। तयोः पुरे भक्ष्यतां भुज्यतां दीयतां रम्यतां गीयतां पीयतां चेति शब्द आसीद्गृहे गृहे। गच्छता कालेन तौ सकलां महीं जेतुमारब्धौ। द्विजानां यज्ञा उत्सादिताः। सर्वे प्राणिनोऽपि पीडितास्ताभ्याम्। अतः शून्यमेवासीज्जगत्तदा। सर्वे देवर्षयः पितामहस्य भवनं गताः शरणार्थम्। तैर्वर्णितं सुन्दोपसुन्दयोः सर्वं कर्म श्रुत्वा पितामहः कर्तव्यं निश्चित्य विश्वकर्माणमाह्वयदादिदेश च सृज्यतां प्रार्थनीयैका प्रमदेति। स पितामहं नमस्कृत्य पुनः पुनश्चिन्तयित्वा दिव्यां योषितं निरमिमीत। सा रत्नानां तिलं तिलं समानीय विनिर्मिता। अतः पितामहस्तस्या नाम तिलोत्तमेत्यकरोत्। किं मया कार्यं हे भूतेशेति सा ब्रह्माणमन्वयुङ्क्त। सुन्दोपसुन्दौ दानवौ गत्वा तयोरन्योन्येन यथा विरोधः स्यात्तथा क्रियतामिति ब्रह्मणोपदिष्टम्। अतः सा तिलोत्तमा वने पुष्पाणि चिन्वती यत्र तौ महासुरा आस्तां तत्र शनैर्गता। तां दृष्ट्वा सुन्दस्तां दक्षिणेन पाणिनागृह्णादुपसुन्दस्तु वामेन पाणिना। सुरापानमत्तौ तौ मम भार्या अथ मम भार्या भवेति समभेवाकथयताम्। ताभ्यां विस्मृतोऽन्योन्यस्नेहः। कलहायमानौ तौ गदे गृहीत्वा प्राहरतामन्योन्यम्। अन्ते गदाभिहतौ तौ नभसश्च्युता अर्का इव धरणीतले मृतवत्पतितौ। एतद्दृष्ट्वा प्रीतः पितामहस्तिलोत्तमामभ्यनन्दत्। आदित्यचरितांल्लोकान्विचरेति तस्यै वरं दत्त्वा पितामहो ब्रह्मलोकं गतः।

## टीपा

[1] सुन्दोपसुन्दनामानौ—सुन्दः उपसुन्दः च सुन्दोपसुन्दौ (द्वन्द्व)। सुन्दोपसुन्दौ नामनी ययोः तौ सुन्दोपसुन्दनामानौ (बहुव्रीहि)।

'कस्मात् भयं नास्तु'—भय, भीति, भी हे व याच अर्थाचे इतर शब्द योजताना भयोत्पादक वस्तूची किंवा प्राण्याची पंचमी योजतात

'त्रिलोकी—त्रयाणां लोकानां समाहारः (द्विगु)'—त्रिलोकी एवं त्रैलोक्यम्। कर्मधारय समासाचें प्रथम पद संख्यावाचक शब्द असेल व सर्व समासाचा उपयोग समुदायवाचक अर्थानें करावयाचा असेल तर 'द्विगु' समास योजतात बहुतेक द्विगु समासाचें रूप नपु नामाप्रमाणें असतें अथवा दीर्घ ईकारान्त असतें

---

## प्रश्न

१ शुनय स्वयमेवेमाः कथाः कथयन्तीति तर्कयित्वा कथा लिखत।

२ या पाठांतील वर्तमानकालवाचक धातु विशेषणें लिहून तीं कशीं तयार झालीं हें सांगा त्याचप्रमाणें त्यांचीं प्रथमा ते तृतीया या विभक्तींचीं सर्व लिंगांचीं रूपें द्या

३ समस्तुरङ्गौ, धृतव्रतौ, तपोभङ्ग, यथेच्छम्, देवर्षय, सुरापातकसी या समासाचा विग्रह करून नाव सांगा

४ ताभ्यां विस्मृतोऽन्योन्यस्नेह। विश्वकर्मा दिव्यां योषितं निरमिमीत। त्वया सृज्यतां प्रार्थनीयैका प्रमदा। ताभ्यामेव वरः प्रार्थितः। या वाक्याचा प्रयोग बदला

५ भक्ष्यतां, भुज्यतां, दीयताम् इत्यादि कर्मणि रूपांबद्दल कर्तरि द्वि पु. एकवचनी रूपें योजा

पाठ करा —स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः।
प्रमदा मानिनी कान्ता ललना वामलोचना ॥

---

शरानस्यन्तं तं नैषादिमपश्यन्। तमनभिज्ञाय ते को भवान् कस्य चेत्यन्वयुञ्जत। तदा सोऽवदत्।

निषादाधिपतेर्वीरा हिरण्यधनुषः सुतम्।
द्रोणशिष्यं च मां वित्त धनुर्वेदकृतश्रमम्॥

एतच्छ्रुत्वा ते पाण्डवा द्रोणाय सर्वमकथयन्। अर्जुनस्तु तमेकलव्यमनुस्मरन् रहसि द्रोणं प्रणयादब्रवीत्। कथं भवद्वचनमनादृत्य मदधिकोऽन्यो भवतः शिष्यो वर्तत इति। तदा मुहूर्तमिव चिन्तयित्वा द्रोणः सव्यसाचिनमादाय नैषादिं प्रति गतः। तत्र चैकलव्यं धनुष्पाणिमनिशं शरानस्यन्तं सोऽपश्यत्। गुरुं दृष्ट्वैकलव्यः शिरसा प्रणम्य सादरं च पूजयित्वा प्राञ्जलिः स्थितः। ततो द्रोणोऽब्रवीत्। यदि त्वं मे शिष्योऽसि तर्हि वेतनं दीयतामिति। एतच्छ्रुत्वा स हृष्टः किं प्रयच्छानि भगवान्मामाज्ञापयत्वित्यवदत्। तदा दक्षिणोऽङ्गुष्ठो दीयतामिति द्रोणोऽवदत्। इदं दारुणं वचोऽपि श्रुत्वाऽदीनमानसः स आत्मनोऽङ्गुष्ठं छित्त्वा द्रोणायार्पयत्। अहो गुरुनिष्ठैकलव्यस्य।

## टीपा

'गृहा - घर' गृह हा शब्द पुल्लिंगामध्ये बहुवचनात योजतात, मात्र अर्थ एकवचनी असू शकतो.

'मृन्मय - मातीचा केलेला' मय हा प्रत्यय बनविलेला किंवा भरलेला या अर्थी नामांना जोडतात असे, सुवर्णमय - सोन्याचा केलेला, जलमय - पाण्याने भरलेला. स्त्रीलिंगी रूप 'मयी' असे होते.

'प्राञ्जलि - प्रबद्ध अञ्जलि येन स' (बहु)

---

## प्रश्न

१ पुढील वाक्य पुरे करा — अर्जुनकौशलेन प्रीतो द्रोणस्तं तथाध्यापयत् यथा .. । द्रोण एकलव्यं शिष्यत्वेन न प्रत्यपद्यत यत . । एकलव्यं दृष्ट्वा श्वा मौनपरोऽभवत् यत ....। द्रोण एकलव्यं दक्षिणमङ्गुष्ठमर्पयेत्याज्ञापयत् यत . ।

२ समास सोडवून नावें सांगा—निषादराजः । विमोक्षादानसन्धानम् । शरपूर्णास्य । धनुर्वेदकृतश्रम- । गुरुनिष्ठा ।

३ अभ्यैयत, अमर्षीत्, प्रत्यगृह्णात्, अस्तुवन्, अह्वयन्, अन्वसृजत ही रूपें ओळखून यांतील धातूंची प्र. भूतकाळी सर्व रूपें द्या.

४ अर्पय, स्था, सार्धम्, अधि+स्था, यावत्–तावत्, किं प्रयोजनम्, यांचा संस्कृत वाक्यांत उपयोग करा.

पाठ करा—धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् ।
इष्वासोऽप्यथ कर्णस्य कालपृष्ठं शरासनम् ॥

---

# पाठ २९

## वर्षासमयः ।

रामो लक्ष्मणं वदति—

अयं स कालः सम्प्राप्तः समयोऽद्य जलागमः ।
सम्पश्य त्वं नभो मेघैः संवृतं गिरिसन्निभैः ॥ १ ॥

रजः प्रशान्तं सहिमोऽद्य वायुर्निदाघदोषप्रसराः प्रशान्ताः ।
स्थिता हि यात्रा वसुधाधिपानां प्रवासिनो यान्ति नराः स्वदेशान् २

क्वचित्प्रकाशं क्वचिदप्रकाशं नभः प्रकीर्णाम्बुधरं विभाति ।
क्वचित्क्वचित्पर्वतसन्निरुद्धं रूपं यथा शान्तमहार्णवस्य ॥ ३ ॥

समुद्वहन्तः सलिलातिभारं बलाकिनो वारिधरा नदन्तः ।
महत्सु शृङ्गेषु महीधराणां विश्रम्य विश्रम्य पुनः प्रयान्ति ॥ ४ ॥

प्रहर्षिताः केतकपुष्पगन्धमाघ्राय हृष्टा घननिर्झरेषु ।
प्रपातशब्दाकुलिता गजेन्द्राः सार्धं मयूरैः समदा नदन्ति ॥ ५ ॥

# पाठ २७

## आम्रान्योक्तयः ।

यद्यपि दिशि दिशि तरवः परिमलबहुलाश्च पारिजाताद्याः ।
तदपि रसालोऽप्येकः कोकिलहृदये सदा वसति ॥ १ ॥

कुन्दे कदम्बे कुमुदेऽरविन्दे यथाकथञ्चित्समयं नयन्ति ।
प्राप्ते वसन्ते पुनरुत्तरङ्गा रसाल जानीहि तवैव भृङ्गाः ॥ २ ॥

भूरिशोऽपि च वसन्ति कानने शाखिनः फलविशेषशालिनः ।
कोकिलस्य तदपीह मानसं नो रसालमपहाय तुष्यति ॥ ३ ॥

आम्र यद्यपि गता दिवसास्ते पुष्पसौरभफलप्रचुरा ये ।
हन्त सम्प्रति तथापि जनानां छाययैव दलयस्यतितापम् ॥ ४ ॥

दिङ्मण्डलं परिमलैः सुरभीकरोषि
सौन्दर्यमावहसि लोचनलोभनीयम् ।
हं हो रसाल फलयस्यं तथापि दूये
यद्ग्रन्थिलं च कठिनं हृदयं बिभर्षि ॥ ५ ॥

यद्येकस्मिन्वर्षे न फलति रसालस्तरुरयं
पिकः किं काकेष्टं फलितमपि निम्बं भजति किम् ।
भजन् ग्लानिं ग्लानिं न वदति च कस्यापि पुरतः
स्मरन् वारं वारं पुनरपि रसालं मृगयते ॥ ६ ॥

### टीपा

फलविशेषशालिन –फलानां विशेषाः फलविशेषाः । फलविशेषैः शालन्ते ते (उपपद स )

---

### प्रश्न

१ एता आम्रान्योक्तयः कीदृशान्नरानुद्दिश्य लिखिताः ?
२ रसालः सर्वेषु तरुषु कथं श्रेष्ठस्तद्वर्णयत ।

३ रसालफलस्य गुणदोषौ यस्मिञ्श्लोके वर्णितौ तस्य श्लोकस्यार्थं विशदीकुरुत ।
४ रसालमुद्दिश्य पिकस्य को भावो वर्तते तच्छ्लोकार्थानुसारेण कथयत ।
५ रचनामुद्दिश्य का: पङ्क्तयो विशिष्टा भान्ति ? तासामर्थं स्पष्टीकुरुत ।
पाठ करा.—आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभ ।

---

# पाठ २८

## एकलव्यस्य ।

---

भीष्मोपदेशमनुसृत्य सर्वे पाण्डवाः कौरवाश्च द्रोणादस्त्रविद्यामध्यैयत । अर्जुनस्य नैसर्गिककौशलं दृष्ट्वाप्रसादाद्द्रोणो यदहं जिष्णुं तथाध्यापयामि यथा तत्समोऽन्यो धनुर्धरो न स्यादिति । एकदा निषादराजस्य हिरण्यधनुषः सुत एकलव्यो रणशिक्षामध्येतुं द्रोणं प्राप्तः । किन्तु स नैषादिरिति चिन्तयित्वा द्रोणो न तं प्रत्यगृह्णादवदच्च ।

> शिष्योऽसि मम नैषादे प्रयोगे बलवत्तरः ।
> निवर्तस्व गृहानेव अनुज्ञातोऽसि नित्यशः ॥ इति ।

एतद्गुरोर्द्रोणस्य वचनं श्रुत्वा स परन्तपो द्रोणं शिरसा प्रणम्यारण्यं गतः । तत्र मृन्मयं द्रोणं कृत्वा तस्मिन्नाचार्यवृत्तिमास्थितः । परया श्रद्धयोपेतः स परमेण योगेन विमोक्षादानसन्धाने परं लघुत्वं प्राप्नोत् । अथैकदा कौरवपाण्डवा द्रोणाज्ञया मृगयार्थं वन इतस्ततोऽचरन् । तेषामनुचरेण सह गतः कोऽपि श्वा तैः सार्धम् । स श्वा पथा क्रीडन्नैषादिं विलोक्य भषन्नतिष्ठत्तस्य समीपे । तदा स तस्य भषतः शुनो मुखे सप्त शरान् युगपदमुञ्चत् । स तु श्वा शरपूर्णास्यः पाण्डवाभ्यवर्तत । तं दृष्ट्वा परं विस्मयं गताः पाण्डवाः । ते तस्य लाघवं शब्दवेधित्वं चास्तुवन् । तमन्विष्यन्तस्ते वनवासिनमनिशं

धारानिपातैरभिहन्यमानाः कदम्बशाखासु विलम्बमानाः ।
क्षणार्जितं पुष्परसावगाढं शनैर्मदं षट्चरणास्त्यजन्ति ॥ ६ ॥

मुक्तासकाशं सलिलं पतद्वै सुनिर्मलं पत्रपुटेषु लग्नम् ।
हृष्टा विवर्णच्छदना विहङ्गाः सुरेन्द्रदत्तं तृषिताः पिबन्ति ॥ ७ ॥

मत्ता गजेन्द्रा मुदिता गवेन्द्रा वनेषु विश्रान्ततरा मृगेन्द्राः ।
रम्या नगेन्द्रा निभृता नरेन्द्राः प्रक्रीडितो वारिधरैः सुरेन्द्रः ॥ ८ ॥

वर्षप्रवेगा विपुलाः पतन्ति प्रवान्ति वाताः समुदीर्णघोषाः ।
प्रनष्टकूलाः प्रवहन्ति शीघ्रं नद्यो जलैर्विप्रतिपन्नमार्गाः ॥ ९ ॥

नरैर्नरेन्द्रा इव पर्वतेन्द्राः सुरेन्द्रदत्तैः पवनोपनीतैः ।
घनाम्बुकुम्भैर्धरणी विसृता तमोविलिप्ता न दिशः प्रकाशाः ॥ १० ॥

महान्ति कूटानि महीधराणां धाराभिधौतान्यधिकं विभान्ति ।
महाप्रमाणैर्विपुलैः प्रपातैर्मुक्ताकलापैरिव लम्बमानैः ॥ ११ ॥

वहन्ति वर्षन्ति नदन्ति भान्ति ध्यायन्ति नृत्यन्ति समाश्वसन्ति ।
नद्यो घना मत्तगजा वनान्ताः प्रियाविहीनाः शिखिनः प्लवङ्गाः ॥ १२ ॥

## टीपा

'जलागमः (कालः)—जलस्य आगमः यस्मिन् सः (ब.)'.

१२ ह्या श्लोकांत प्रथमार्धांत ज्या क्रमानें क्रियापदें योजली आहेत त्याच क्रमानें उत्तरार्धांत कर्तृपदें योजलेलीं आहेत. या अलंकाराला 'यथासंख्य' असें म्हणतात.

---

## प्रश्न

१ वर्षाकालातील आकाशाला उद्देशून जीं जीं विशेषणें योजलेलीं आहेत त्यांचा अर्थ स्पष्ट करा.

२ वरील श्लोकांतील उपमांचें स्पष्टीकरण करा.

३ शब्दसादृश्यामुळें कोणता श्लोक तुम्हांला आवडतो तें सकारण सांगा.

४ चौथ्या श्लोकामध्यें स्पष्ट रीतीनें उपमा योजलेली नाहीं. ती प्रच्छन्न आहे ती स्पष्ट करा.

५ पावसाळ्याचें गद्यमय वर्णन वरील श्लोकांचे आधारें करा.

पाठ करा:—१ स्त्रियां प्रावृट् स्त्रिया भूम्नि वर्षा अथ शरत् स्त्रियाम् ।

२ आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम् ।
पयः कीलालममृतं जीवनं भुवनं वनम् ॥
कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम् ।
अम्भोर्णस्तोयपानीयनीरक्षीराम्बुशंवरम् ॥

---

## पाठ ३०

### किरातार्जुनीयं युद्धम् (पूर्वभागः) ।

द्यूतपराभयादनन्तरं पाण्डवा वनवासं गताः । तत्र युधिष्ठिर उदासीनवदास्त । कौरवसभायामवमतायै द्रौपद्यै नारोचतैषा वृत्तिः । सा युधिष्ठिरमुद्दिश्यावदत् । इन्द्रतुल्यैः राजभिर्धृता मही त्वया स्वहस्तेन त्यक्ता । आत्मवधूमिव श्रियं परैर्नीयमानां दृष्ट्वा कथं त्वं शत्रून् दण्डयितुं नोत्सहसे । अयं महारथो वृकोदरोऽन्तर्गिरि पदातिरेव परिभ्रमति । अयं वालयोपमोऽर्जुनो वल्कलानि धृत्वा चरति । इमौ यमौ वनान्तशय्यामधिशयाते । तथापि न स्पृहणीयावस्था । अधुना त्वमशिवैः शिवारुतैर्निद्रां जहासि । वन्यफलाशिन स्तव वपुः कार्श्यमुपैति । अतः शान्तिं विहाय तत्प्रसिद्धं धाम विद्विषां वधाय सन्धेहि । अथवा जटाधरो भूत्वा पावकं सजुहुधीति । याज्ञसेन्या इदमुत्साहकरं वचनं श्रुत्वामर्षणो भीमसेनो धर्ममब्रवीत् । हे पाण्डवर्षभ अस्त्रविद्भिर्दृढधन्विभिः परिवृतस्त्वं धार्तराष्ट्रेभ्यः श्रियमादत्स्वेति । इदं वचनं श्रुत्वा युधिष्ठिरो द्रौपदीं भीमं चैवमवदत् । दुर्योधनस्य सैन्ये दुराधर्षा वीराः सन्ति । ते दुर्योधनेन तथा विशेषतो मानिता यथा ते सङ्ग्रामे तदर्थं प्राणानपि जह्युः । अतो

नाहं मन्य उपपन्नं कालमिमं तैः सह विग्रहार्थम्। अनेन प्रतिवचनेनामर्षणोऽपि भीमसेनः शान्तियुक्तोऽभवत्।

तदैवागतो व्यासो युधिष्ठिरमेवमुपादिशत्। यद्यर्जुनो महेन्द्रं रुद्रं वरुणं कुबेरं यमं चास्त्रहेतोर्गत्वा तान्याप्नुयात्तर्हि सोऽजेयो भवेदिति। एवमुक्त्वा व्यासोऽन्तरदधात्। पश्चाद्व्यासवचनं स्मृत्वा धर्मोऽर्जुनाय रहसि समकथयत्। अस्त्रप्राप्त्यर्थं देवानां प्रसादं त्वं यथाकालं प्रतिपालयोग्रेण च तपसाऽऽत्मानं योजय। अतो धनुष्मान् खड्गी कवची मुनिव्रते स्थितस्त्वमुत्तरां दिशं गच्छ। पश्चाच्छक्रमेव प्रपद्यस्व स तेऽस्त्राणि यच्छतीति। एवं धर्मराजस्य निदेशात् पुरन्दरं द्रष्टुकामो रुचिरं धनुर्गृहीत्वोदीचीं दिशं प्रातिष्ठत। हिमवन्तं तथाच गन्धमादनमतिक्रम्य धनञ्जय इन्द्रकीले षडहोरात्रानातिष्ठत्। तत्र चोग्रं तप आचरत्। तस्य तपसा तुष्टः शक्रो द्विजरूपेण तत्र प्राप्य 'वरं वृणीष्व भद्रं ते शक्रोऽहमरिसूदन' इत्यवदत्। एवमुक्तो धनञ्जयः प्राञ्जलिः प्रणतो भूत्वाऽवदद्भवतोऽस्त्राणि प्रार्थय इति। इन्द्रोऽवदद्यदा त्वं भूतेशं त्र्यक्षं शूलधरं शिवं पश्येस्तदाहं तुभ्यं दिव्यास्त्राणि दद्यामिति। अतोऽर्जुनो हिमवतः पृष्ठेऽत्युग्रं घोरं तपस्तप्तुमारभत।

## टीपा

'अन्तर्गिरि—गिरेः अन्तः' पर्वताच्या दरीत–अव्ययीभाव समास.

'शय्यामधिशेते'—अधि+शी या क्रियापदाचा उपयोग स्थलवाचक शब्दाची द्वितीया घेऊन करितात.

'उदीची दिक्'—उत्तर दिशा, 'अवाची दिक्'—दक्षिण दिशा, 'प्राची दिक्'—पूर्व दिशा, 'प्रतीची दिक्'—पश्चिम दिशा.

'अहोरात्रः—अहः च रात्रि च–अहोरात्रः (द्वन्द्व)

'त्र्यक्षः—त्रीणि अक्षीणि यस्य सः (बहु.).' 'अक्षि' शब्दाचें बहुव्रीहि समासाचे शेवटीं 'अक्ष' असें रूप होतें.

---

## प्रश्न

१ वनवासिनां पाण्डवानामवस्था वर्णयत। व्यासेन युधिष्ठिराय किं कथितम्? शक्रोऽर्जुनं किं कर्तुमुपादिशत्?

२ पक्वानि फलानि अश्नन्ति ते । शक उपमा यस्य स । गुहाया अन्त । हरिणस्य इव अक्षिणी यस्या सा । कौरवाणा राजा । या शब्दसमूहाबद्दल समास योजून नावें सांगा.

३ दद्याम्, अन्तरदधात्, सन्नह्यधि, वृणीष्व, जहासि, आदत्स्व, उर्पति, अह्नु, सन्देहि ही रूपें ओळखून त्या त्या धातूंची त्या त्या काळाचीं सर्व रूपें द्या.

पाठ करा —शम्भुरीश पशुपति शिव शूली महेश्वर ।
ईश्वर शर्व ईशान शङ्करश्चन्द्रशेखर ॥

---

# पाठ ३१

## किरातार्जुनीयं युद्धम् (उत्तरभाग.)।

---

अर्जुनोऽतिघोरं तपस्तप्तातपत्। तस्योग्रेण तपसा भीताः सर्वे महर्षयः शिवं गत्वावदन्। महातेजाः पार्थ उग्रे तपसि स्थितो नः सर्वान् सन्तापयत्यतोऽसौ निवार्यतामिति। तदा धूर्जटिरवदत्। अहं जानामि तस्य मनोरथं पूरयामि च तम्। यूयं गच्छत यथागतमिति। अतः पिनाकपाणिः कैरातं वेषमास्थाय वपुषा विभ्राजमानः समानवेषया पार्वत्या तथा चानुचरैः सहार्जुनसमीपं प्राप्तः। तस्मिन्नेव क्षणे कोऽपि वराहरूपस्तपस्विनमर्जुनं हन्तुमभ्यद्रवत्। यावत्तं वीक्ष्य सचापोऽर्जुनो बाणं प्रक्षेप्तुमुद्यतोऽभवत्तावत्स किरातरूपिणा शिवेन निवारितः। किन्तु तद्वचनमनादृत्य शरो प्रक्षिप्तो फाल्गुनेन। किरातोऽपि सममेवैकलक्ष्येऽग्निप्रख्यं शरं व्यसृजत्। तयोर्बाणाभ्यां विद्धो वराहरूपी राक्षसः पञ्चत्वं गतः। अनन्तरमर्जुनस्तं स्त्रीगणपरिवृतं किरातमपृच्छत् केन कारणेन मत्परिग्रहोऽयं त्वया विद्धः। एष न मृगयाधर्मः। अतो युद्धाय सज्जो भवेति। तदा किरातः प्रत्यवदन्मम प्रहारेणैवायं

र्विजीवितः मृतो यमसदनं च नीतः। अतो न त्वं मां दोषपक्षे स्थापयितुमर्हसि। भव त्वं सिद्धो मम नाराचावपातं सोढुमिति। अतः प्रवृत्तं महाघोरं युद्धं तयोः। तौ परस्परमविध्यतां बाणैः। अन्ते किरातबाणैः पीडितोऽर्जुनो मोहमापन्नो भूमौ न्यपतत्। मुहूर्तादनन्तरं लब्धचेतनोऽर्जुनो भृशं दुःखितो रुधिराक्तश्च उत्थाय शरण्यं पिनाकिनं शरणं गत्वा मृन्मयं स्थण्डिलं कृत्वा माल्येन भवमपूजयत्। तन्माल्यं क्षणेनैव किरातशिरसि स्थितं दृष्ट्वा भृशं प्रमुदितो भूत्वा किरातपादयोरपतत्। भवश्च प्रीतो भूत्वाब्रवीत्।

भो भोः फाल्गुन तुष्टोऽस्मि कर्मणाऽप्रतिमेन ते।
शौर्येणानेन धृत्या च क्षत्रियो नास्ति ते समः॥ इति।

पश्चादर्जुनोऽर्घ्याभिः स्तुतिभिः शिवमस्तौत्। तदा हृष्टो हरो गृहाण वरमस्मत्तः काङ्क्षितमित्यवदत्। तदार्जुनोऽवदत्।

वरं ददासि चेन्मह्यं कामं प्रीत्या वृषध्वज।
कामये दिव्यमस्त्रं तद् घोरं पाशुपतं प्रभो॥

अतो भवस्तदस्त्रं पार्थायाददात्समन्त्रकम्। एवं समाप्तं किराता र्जुनयोर्युद्धम्।

## टीपा

महाभारतातील या कथेला अनुसरून भारवि कवीनें 'किरातार्जुनीयम्' या नावाचें काव्य लिहिलें आहे

'दोषपक्षे स्थापय कमपि—दोष कस्मिन्नपि निक्षिप्' कोणावर तरी दोष ठेवणें

'विजीवित —विगतं जीवितं यस्य स (बहु)' उपसर्गासहित धातूचें कर्मणि भू. धा विशेषण जर बहु. समासाचें प्रथम पद असेल तर समासात उपसर्ग तेवढाच प्रथम पद म्हणून ठेवितात यास 'प्रादि बहुव्रीहि' असें म्हणतात

---

## प्रश्न

१ सर्वे महर्षय शिव शरणार्थं गता यत ———— । कैरातवेष-मास्थाय शिवोऽर्जुनस्य समीपं प्राप्त यत ———— । अर्जुन

किरातबाणप्रहारमधर्मममन्यत यत ——————— । अर्जुनं शिव-मपूजयत् यत ——————— । हीं वाक्यें पुरीं करा.

२ भवस्तदस्त्र पार्थायाददालमन्त्रकम्। अर्जुन शिवमभ्यांभि स्तुतिभिरस्तौत्। मोहमापन्नोऽर्जुनो भूमौ न्यपतन्। असौ भवता निवार्यताम्। अर्जुनेन शरौ निक्षिप्तौ । या वाक्याचा प्रयोग बदला.

३ श्रीगणपरिवृत । नाराचावपातः । समानवेषः । लब्धचेतनः । रुधिराक्लिन । या समासाचा विग्रह करून नावें सांगा.

पाठ करा —उमा कात्यायनी गौरी काली हैमवतीश्वरा ।
शिवा भवानी रुद्राणी शर्वाणी सर्वमङ्गला ।
अपर्णा पार्वती दुर्गा मृडानी चण्डिकाम्बिका ॥

---

# पाठ ३२

## शरद्वर्णनम् ।

शाखासु सप्तच्छदपादपानां प्रभासु तारार्कनिशाकराणाम् ।
लीलासु चैवोत्तमवारणानां श्रियं विभज्याद्य शरत् प्रवृत्ता ॥ १ ॥
मत्तप्रगल्भेषु च वारणेषु गवां समूहेषु च दर्पितेषु ।
प्रसन्नतोयासु च निम्नगासु विभाति लक्ष्मीर्बहुधा विभक्ता ॥ २ ॥
व्यभ्रं नभः शस्त्रविधौतवर्णं कृशप्रवाहाणि नदीजलानि ।
कह्लारशीताः पवनाः प्रवान्ति तमोविमुक्ताश्च दिशः प्रकाशाः ॥ ३ ॥
त्यक्त्वा वराण्यात्मविभूषणानि बर्हाणि तीरोपगता नदीनाम् ।
निर्भर्त्स्यमाना इव सारसौघैः प्रयान्ति दीना विमदा मयूराः ॥ ४ ॥
अनेकवर्णाः सुविनिष्टकाया नवोदितेष्वम्बुधरेषु नष्टाः ।
क्षुधार्दिता घोरविषा बिलेभ्यश्चिरोषिता विप्रसरन्ति सर्पाः ॥ ५ ॥

रात्रिः शशाङ्कोदितसौम्यवक्त्रा तारागणोन्मीलितचारुनेत्रा ।
ज्योत्स्नांशुकप्रावरणा विभाति नारीव शुक्लांशुकसंवृताङ्गी ॥ ६ ॥

सुप्तैकहंसं कुसुमैरुपेतं महाह्रदस्थं सलिलं विभाति ।
घनैर्विमुक्तं निशि पूर्णचन्द्रं तारागणाकीर्णमिवान्तरिक्षम् ॥ ७ ॥

जलं प्रसन्नं कुसुमप्रहासः क्रौञ्चस्वनः शालिवनं सुपक्वम् ।
मृदुश्च वायुर्विमलश्च चन्द्रः शंसन्ति वर्षव्यपनीतकालम् ॥ ८ ॥

लोकं सुवृष्ट्या परितोषयित्वा नदीतटाकानि च पूरयित्वा ।
निष्पन्नसस्यां वसुधां च कृत्वा त्यक्त्वा नभस्तोयधराः प्रनष्टाः ॥ ९ ॥

## टीपा

'परितोषयित्वा'—परितोष्य असें पाहिजे हें रूप अपवाद म्हणून समजावें.

---

## प्रश्न

१ कानि कानि लक्षणानि वर्षाकालस्य निर्गमं सूचयन्ति ?
२ शरद् आरम्भ कै कै प्रकारें प्रदर्शते ?
३ 'रात्रि ' व 'महाह्रदस्थ सलिलम्' यांना दिलेल्या उपमाचें स्पष्टीकरण करा.
४ नभ , नदीजलानि, पवन व दिस यांचें स्वरूप शरद् कनून कसें असतें ?
५ शरद्वर्णनांतील श्लोकांपैकीं तुम्हास कोणता श्लोक आवडतो तें सकारण सांगा.
६ मत्तप्रगल्भा , निम्नगा, ताराकनिशाकरा , चिरोषिता , क्षुधार्दिता, निष्पन्नसस्या , तमोविमुक्ता या समासाचा विग्रह करून नावें सांगा.

पाठ करा —हिमांशुश्चन्द्रमाश्चन्द्र इन्दु कुमुदबान्धव ।
विधु सुधांशु शुभ्रांशुरोषधीशो निशापति ॥
अब्जो जैवातृक सोमो ग्लौर्मृगाङ्क कलानिधि ।
द्विजराज: शशधरो नक्षत्रेश क्षपाकर ।

# पाठ ३३

## वृद्धब्राह्मणघटोत्कचसंवादः ।

( पत्नीपुत्रत्रयपरिवृतो ब्राह्मण प्रविशति पृष्ठतश्च घटोत्कचः )

घ.:—भो ब्राह्मण तिष्ठ तिष्ठ । न गन्तव्यं पदात्पदमपि ।

ब्रा.:—ब्राह्मणि न भेतव्यम् । न भेतव्यं मम पुत्रकाः । शङ्के नात्रातिदूरेण पाण्डवाश्रमेण भवितव्यम् ।

प्र. पुत्रः—भोस्तात न तत्र पाण्डवा इति मन्ये ।

वृद्धः—पुत्र कथं त्वं जानीषे ।

प्रथमः—श्रुतं मया तस्मादाश्रमादागतेन केनचिद्ब्राह्मणेन शत-कुम्भं नाम यज्ञमनुभवितुं महर्षेर्धौम्यस्याश्रमं गता इति ।

वृद्धः—हन्त हताः स्मः ।

प्रथमः—तात न तु सर्व एव । आश्रमपरिपालनार्थमिह स्थापितः किल मध्यमः । भवतु प्रार्थयिष्ये तावदेनम् । भोः पुरुष अस्त्यस्माकं मोक्षः ।

घ.:—मोक्षोऽस्ति समयतः ।

वृद्धः—कः समयः ।

घ.—अस्ति मे तत्रभवती जननी । तयाहमाज्ञतः-पुत्र ममोपवास-विसर्गार्थमस्मिन्वनप्रदेशे कश्चिन्मानुषः परिमृग्यानेतव्य इति । ततो मयासादितो भवान् ।

> पत्न्या चारित्र्यशालिन्या द्विपुत्रो मोक्षमिच्छसि ।
> बलाबलं परिज्ञाय पुत्रमेकं विसर्जय ॥

वृद्धः—ब्राह्मणि एष एव मे निश्चयः ।

> कृतकृत्यं शरीरं मे परिणामेन जर्जरम् ।
> राक्षसाग्नौ सुतापेक्षी होष्यामि विधिसंस्कृतम् ॥

ब्राह्मणी—आर्ये मा मैवम्। पतिमात्रधर्मिणी पतिव्रतेति नाम। गृहीतफलेनैतेन शरीरेणार्ये कुलं च रक्षितुमिच्छामि।

घ.—न खलु स्त्रीजनोऽभिमतस्तत्रभवत्याः। निवर्तयितव्यं युष्माभिः।

वृद्धः—अहमनुगमिष्यामि भवन्तम्।

घ.—हं वृद्धस्त्वमपसर।

प्रथमः—भोस्तात ब्रवीमि खलु तावत्किञ्चित्।

वृद्धः—पुत्र कथय।

प्रथमः—

मम प्राणैर्गुरुप्राणानिच्छामि परिरक्षितुम्।
रक्षणार्थं कुलस्यास्य भोक्तुमर्हति मां भवान्॥

तृतीयः—आर्य मा मैवम्।

ज्येष्ठो भ्राता पितृसमः कथितो ब्रह्मवादिभिः।
ततोऽहं कर्तुमस्म्यर्हो गुरूणां प्राणरक्षणम्॥

वृद्धः—ज्येष्ठमिष्टतमं न शक्नोमि परित्यक्तुम्।

ब्राह्मणी—यथार्यो ज्येष्ठमिच्छति तथाहमपि कनिष्ठमिच्छामि।

द्वितीयः—पित्रोरनिष्टः कस्येदानीं प्रियः।

घ.—अहं प्रीतोऽस्मि शीघ्रमागच्छ।

द्वितीयः—

धन्योस्मि यद् गुरुप्राणाः स्वैः प्राणैः परिरक्षिताः।
बन्धुस्नेहादि महतः कालस्नेहस्तु दुर्लभः।

घ.—अहो स्वजनवात्सल्यमस्य वटोः।

द्वितीयः—भोस्तात अभिवादये। भो अम्ब अभिवादये।

उभौ—जात चिरं जीव।

द्वितीयः—अनुगृहीतोऽस्मि। भोः पुरुष ब्रवीमि किञ्चित्।

घ.—ब्रूहि ब्रूहि शीघ्रम्।

द्वितीयः—एतस्मिन्वनान्तरे जलाशय इव दृश्यते। तत्र मे प्रकल्पितपरलोकस्य पिपासाप्रतिकारं करिष्यामि।

प.—इदव्यघसायिन् गम्यताम् । अतिक्रामति मातुराहारकालः । शीघ्रमागच्छ ।

द्वितीय.—भोस्तात एष गच्छामि । ( निष्क्रान्त )

( एवं सर्वे तत्रैव प्रत्यागमन प्रतीक्षमाणास्तिष्ठन्ति । )

## टीपा

हा उतारा सुप्रसिद्ध भास कवीच्या ‘मध्यमव्यायोग’ नावाच्या नाटकांतून घेतलेला आहे पाण्डव वनवासात असताना हिडिम्बावनाजवळ आश्रमात राहात होते भीमाला आश्रमाचें रक्षण करण्यास सांगून ते सर्व धौम्य ऋषींच्या आश्रमाप्रत गेले होते अशा वेळी रानांतून एक वृद्ध ब्राह्मण आपली पत्नी व तीन मुलगे यांसह मित्राकडे जात होता इतक्यातच हिडिम्बेनें आज्ञा केली त्याप्रमाणें उपासाचें पारणें फेडण्याकरिता तिचा पुत्र घटोत्कच एखाद्या ब्राह्मणाच्या शोधात होता, त्यानें यांना पाहिलें व त्यांच्यापैकी एकाची मागणी केली. त्या वेळी झालेला संवाद वरील उताऱ्यात आलेला आहे

‘होष्यामि—अग्नीला अर्पण करीन’ हु ( ३ प प ) धातूचें द्वि भविष्यकालार्थी प्र पुरुषी एकवचनी रूप

‘यास्यामि’—या ( २ प प ) धातूचें द्वि भविष्य प्र पुरुषी एकवचनी रूप तसेंच ‘करिष्यामि’—हें ‘कृ’ चें

तत्रभवती—‘भवत्’ हें सर्वनाम अत्र व तत्र यांना आदरार्थी अर्थ दर्शविण्याकरिता जोडतात जवळ असणाऱ्यासंबंधीं ‘अत्र’ या अव्ययाला जोडून लिहितात व दूर असेल अथवा हजर नसेल त्यासंबंधीं ‘तत्र’ या अव्ययाला जोडून लिहितात

---

## प्रश्न

१ घटोत्कच किमर्थं मानुषान्वेषणपर आसीत् ? पाण्डवा कुत्र गता ? क समय इष्टो घटोत्कचस्य ? मध्यम पुत्र केन कारणेन सम्मतो घटोत्कचस्य ?

२ या पाठातील ‘तव्य’–प्रत्ययान्त कर्मणि विध्यर्थी धातु विशेषणें सांगून त्यांचा वाक्यात उपयोग करा

३ प्रकम्पितपरलोक , आहारकाल , स्वजनवात्सल्यम्, राक्षसाग्नि , गृहीत-फलम् या समासाचा विग्रह करून नाव सांगा.

४ भी, ज्ञा ( आ प ), हु, या शक्, अनु+ग्रह् , ब्रू या धातूचीं वर्तमान-काळीं, प्रथमभूतकाळीं व आज्ञार्थी रूपें सांगा

---

# पाठ ३४

## सामान्यश्लोकाः ।

---

राष्ट्रस्य चित्तं कृपणस्य वित्तं मनोरथं दुर्जनमानुषाणाम् ।
स्त्रियाश्चरित्रं पुरुषस्य भाग्यं देवो न जानाति कुतो मनुष्यः ॥ १ ॥

न कस्यचित्कश्चिदिह स्वभावाद्भवत्युदारोऽभिमतः खलो वा ।
लोके गुरुत्वं विपरीततां वा स्वचेष्टितान्येव नरं नयन्ति ॥ २ ॥

स्वैरं क्षुधार्तो महिलां सपुत्रां खादेत्क्षुधार्ता भुजगी स्वमण्डम् ।
क्षीणा नरा निष्करुणा भवन्ति बुभुक्षितः किं न करोति पापम् ॥ ३ ॥

एकस्य दुःखस्य न यावदन्तं गच्छाम्यहं पारमिवार्णवस्य ।
तावद्द्वितीयं समुपस्थितं मे छिद्रेष्वनर्था बहुलीभवन्ति ॥ ४ ॥

श्रुतिर्विभिन्ना स्मृतयश्च भिन्ना नैको मुनिर्यस्य वचः प्रमाणम् ।
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ॥ ५ ॥

किमिष्टमन्नं खरसूकराणां किं रत्नहारो मृगपक्षिणां च ।
अन्धस्य दीपो बधिरस्य गीतं मूर्खस्य किं शास्त्रकथाप्रसङ्गः ॥ ६ ॥

अनन्तपारं किल शब्दशास्त्रं स्वल्पं तथायुर्बहवश्च विघ्नाः ।
सारं ततो ग्राह्यमपास्य फल्गु हंसो यथा क्षीरमिवाम्बुमध्यात् ॥ ७ ॥

यथा विहङ्गास्तरुमाश्रयन्ति नद्यो यथा सागरमाश्रयन्ति ।
यथा तरुण्यः पतिमाश्रयन्ति सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ ८ ॥

जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।
गुणाधिके पुंसि जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः ॥ ९ ॥

पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद्भजन्ते मूढः परप्रत्ययनेयबुद्धिः ॥ १० ॥

टीपा

'बहुलीभवन्ति—पुष्कळ वाढतात' अबहुला बहुला सम्पद्यन्ते तथा भवन्ति (च्विरूप)

प्रश्न

१ ५ व ७ या श्लोकात जो उपदेश केलेला आहे तो गद्यरूपानें संस्कृतमध्यें लिहा.

२ तिसऱ्या श्लोकात कवीला काय सांगावयाचें आहे?

३ जगात महत्त्व कशानें प्राप्त होतें?

४ रचनेच्या दृष्टीनें तुम्हास कोणता श्लोक आवडतो तें सकारण सांगा.

५ पुढील समासाचा विग्रह करून नावें सांगा —परप्रत्ययनेयबुद्धिः, गुणाधिपः, खरसूकरा, अनन्तपारम्, जनानुरागप्रभवा ।

## पाठ ३५

### रत्नावली-कथा ।

(प्रथमो विभाग)

अस्तीह भारते वर्षे कौशाम्बी नाम नगरी। तत्रोदयनो नाम वत्सदेशस्य राजाऽऽसीत् । तस्य च सचिवो यौगन्धरायणो नामातीव चतुरः। तस्मिन् राज्ञि महीं शासति केनचित्सिद्धेनादिष्टम् । यथा सिंहलेश्वरस्य दुहितरं रत्नावलीं यः परिणयेत्स सार्वभौमो भवेदिति। ततस्तत्प्रत्ययात्तेन मन्त्रिणा वत्सेश्वरस्यार्थे बहुशः सिंहलेश्वरः प्रार्थित। सिंहलेश्वरस्तु वत्सेश्वरस्य महिष्या वासवदत्तायाः सम्बन्धित्वेन रत्नावलीं वत्सराजाय प्रदातुं नेच्छत्। तदा सहसोत्पन्नेन वह्निना वासवदत्ता दग्धेति प्रसिद्धिमुत्पाद्य

यौगन्धरायणः सिंहलेश्वरान्तिकं बाभ्रव्यं कञ्चुकिनं रत्नावलीं पुनः प्रार्थयितुं प्राहिणोत्। एवं पुनः प्रार्थितेन सिंहलेश्वरेण चिन्तितम् 'वत्सेश्वरेण सहास्माकं सम्बन्धलोपो मा भवतु' इति। ततस्तेन दत्ता रत्नावली वत्सेश्वराय प्रतिपादयितुं सिंहलेश्वरामात्येन वसुभूतिना बाभ्रव्येण चानीयमाना समुद्रे यानभङ्गान्निमग्ना। निमग्नया तया किमपि फलकमासादितम्। सिंहलेभ्यः प्रत्यागच्छता केनचित्कौशाम्बीयेन वणिजा तदवस्था सा दृष्टा। रत्नमालाचिह्नायास्तस्याः प्रत्यभिज्ञानतः कौशाम्बीं च प्रापिता। तदा यौगन्धरायण इयं वारिधेः सागरतो लब्धेति मत्वा सागरिकेति तस्या नाम कृत्वा तां सगौरवं देवीहस्ते न्यक्षिपत्। एकदा वसन्तोत्सवे प्रवृत्ते वासवदत्तया राजा मकरन्दोद्याने मदनपूजां निर्वर्तयितुमाहूतः। यदा स तत्रागतस्तदा स परिजनमध्यगतया सागरिकया दृष्टः। वत्सं दृष्ट्वा तस्मिन्बद्धमनोभावा साभवत्। नृपोऽपि तां दृष्ट्वा तदाकृष्टहृदयोऽभवत्। सागरिकापि तं वत्सराजमेव चिन्तयन्ती स्वसख्या सुसङ्गतया सह कथमपि कालमनयत्।

( द्वितीयो विभाग )

गच्छति काले राजानमस्वस्थं दृष्ट्वा तस्य वयस्यो वसन्तकः सुसङ्गतामेकान्ते प्राह। सुसङ्गते न हि सागरिकां वर्जयित्वा प्रियवयस्यस्यान्यत्किमप्यस्वस्थतायाः कारणम्। तदत्र प्रतीकारश्चिन्त्यतामिति। तत सुसङ्गतया प्रतिज्ञातम्। आर्य विरचितभङ्गिनीयेषा सागरिका गृहीत्वा देव्याश्चरत्याः काञ्चनमालाया वेषधारिण्या मया प्रदोषे माधवीलतामण्डप भर्तुर्मनोरथा सागरिका समागमेनावश्यं पूरयितव्या इति। इममुदन्तमुपलभ्य देवी वासवदत्ता स्वयमेव काञ्चनमालया सह कृतावगुण्ठनोपाढौकत। तत्र सागरिका प्रतिपालयन्तौ स्थितौ राजा वसन्तकश्च। तयोरागमनं दृष्ट्वा काञ्चनमालासहिता सागरिकेयागतेति मन्यमानो राजोपसृत्य सागरिकाधिया तां प्रणयमधुरैर्वचोभिरनुनेतुं प्रसादयितुं च

प्रायतत । तानि वचांसि श्रुत्वा वासवदत्ता सरोषमवगुण्ठनमपनीयात्मानं दर्शयामास । तां दृष्ट्वा विलक्षो राजा तत्प्रसादनपरोऽभवत् । सा त्वकृत्वैव प्रसादं गता । गतायां तस्यां वासवदत्तावेषधारिणी सागरिका तमेवोद्देशं प्राप्ता । सा सागरिकेति निश्चित्य राजा तस्याः समीपं गत्वावदत् । मम परा प्रीतिस्त्वय्येवेति । यावत्स एवं वदति तावदेवानुशयवती वासवदत्ता भर्तारमनुनेतुं पुनः प्राप्ता । तां पुनरागतां दृष्ट्वा तस्याः प्रसादनमशक्यमिति मत्वा देवि वेषसादृश्येन वञ्चिता वयम् । तत्क्षम्यतामित्युक्त्वा तस्याः पादयोरपतत् । ततः सागरिकामग्रतः कृत्वा वासवदत्ता गता । सागरिका तया कुत्र नीतेति न ज्ञातं केनापि । अतः स नृप उत्कण्ठितचेता आसीत् ।

( तृतीयो विभाग. )

एतस्मिन्नेवान्तरे सम्बरसिद्धिर्नाम कश्चिदैन्द्रजालिको यौगन्धरायणप्रयुक्त आगत्य देव मम खेलनं द्रष्टव्यमिति प्रार्थयत । राज्ञानुज्ञातः स पिच्छिकां भ्रमयन् ब्रह्माणमिन्द्रं विष्णुं च क्षणेनादर्शयत् । तद् दृष्ट्वा राज्ञो वयस्यो वसन्तकोऽब्रवीत् । अरे यद्यमुना परितुष्टेन कार्यं तर्हि दर्शय सागरिकामिति । अत्रान्तरे सिंहलेश्वरेण प्रहितो वसुभूतिर्वत्सस्य कञ्चुकिना वाभ्रव्येण सह द्रष्टुमागतः । ततो विश्रम्यतामिदानीमिति निर्दिष्ट ऐन्द्रजालिकः पिच्छिकां भ्रमयित्वा दर्शनीयं मे खेलनमेकमवश्यमिति सम्प्रार्थ्य निरगच्छत् । वसुभूतिना रत्नावली यानभङ्गात्समुद्रे निमग्नेति कथितम् । सङ्कथाव्यापृतेषु सर्वेष्वन्तःपुरेऽग्निरुत्थित इति महान्कोलाहल उदभवत् । ततो वासवदत्ता निर्घृणया मया निगडसंयमिता सागरिका विपद्यते तत्परित्रायतामार्यपुत्र इत्युच्चैराक्रोशत् । श्रुत्वैतद् वत्सेश्वरः पतङ्गवृत्तिर्भूत्वाग्निं प्राविशत् । तमन्वगच्छद्वासवदत्ता । ततः सर्वेऽपि जना अग्निप्रवेशमकुर्वन् । यदा राज्ञा सागरिका बहिरानीता तदा वह्निः प्राशाम्यत् । ततः किंनु खल्विदमिन्द्रजालमिति सर्वेऽ

शङ्कन्त । यदा सागरिका बहिरानीता तदा सा प्रत्यभिज्ञाता वसुमतिवाभ्रव्याभ्याम् । या सागरिका सैव रत्नावली स्वभगिनीति ज्ञात्वा वासवदत्ता तस्या बन्धनान्यपानाययत् । यदा सर्वे सुखमुपविष्टास्तदा यौगन्धरायणस्तत्र प्राप्तः । स्वामिनोऽभ्युदयार्थं यत्सर्वं तेन परोक्षं कृतं तत्सर्वं सोऽकथयत् । ततो वासवदत्ता स्वकीयैराभरणैरलङ्कृत्य सागरिकां हस्ते गृहीत्वा देवीशब्दभाजं च तां कृत्वा स्वीकुरोत्वार्यपुत्र इमां रत्नावलीमित्युक्त्वा तां तस्मै समर्पितवती ।

## टीपा

'रत्नावली' नाटिका श्रीहर्षांनी लिहिली. त्या नाटिकेचे आधारानें वरील गोष्ट लिहिलेली आहे.

'अपानाययत्–दूर करविली, काढवली' 'अप+नी' याच्या प्रयोजकाचें [illegible] भू. तृ. पुरुषी एकवचनी रूप.

'परोक्षम् ( अव्यय )–न कळत.' अक्ष्णोः परम् ( अव्ययीभाव समास )

'समर्पितवती–अर्पण करती झाली.' ( सम्+ऋ याच्या प्रयोजकाच्या कर्तरि भूत. धा. विशेषणाचें स्त्री. प्र. एकवचनी रूप ).

संस्कृतमध्यें 'आर्यपुत्र' हा शब्द स्त्रिया नवऱ्याला उद्देशून योजतात.

---

## प्रश्न

१ रत्नावल्या नाम सागरिकेति कथं जातम् ?

२ सागरिकाया निवासस्थलं ज्ञातुं का युक्तिः कृता यौगन्धरायणेन ?

३ या वृत्तान्यातील सर्व सति सप्तम्यन्त रचना शोधून काढा व त्यांचा उपयोग स्पष्ट करा.

४ समास सोडवून नावें सांगा —पद्ममनोभावा, रत्नमालाश्चिह्ना, सरोपम्, प्रणयमधुराणि, सङ्गव्यापृता: ।

५ रूपे ओळखून वाक्यात योजा —आसादितम्, परित्रायताम्, सम्प्रार्थ्य, प्रतिपात्स्यन्ती, निर्वर्तयितुम् ।

---

# शब्दसङ्ग्रह (संस्कृत-मराठी)

### अ

अंशुकम्—वस्त्र
अग्निकल्प (वि.)—अग्नीसारखा
अग्न्यस्त्र —बाणाचें नाव
अङ्गुष्ठ —आंगठा
अजिनम्—कातडें
अजेय (न त)—जिंकण्यास अशक्य
अदीन (वि)—धीराचा, उत्साहयुक्त
अधिष्ठानम्—शहर
अनार्य (वि.)—क्षुद्र, नीच, दुष्ट
अनिशम् (अ)—एकसारखें, सतत
अनुग —अनुयायी, सेवक
अनुयायिन् (पु)—पाठीमागून येणारा
अनु+युज् (७ आ प)—विचारणें, चौकशी करणें
अनु+रुध् (४ आ प)—अनुसरण, पाळणें
अनुष्ठित (अनु+स्था—कर्मणि भू धा वि)—आचरलेला, कृतीत आणलेला
अन्तर्+धा (३ उ प.)—लोपणें, अदृश्य होणें
अन्तिकम् (अ)—जवळ
अन्तेवासिन् (पु)—शिष्य
अन्वास्यमान (अनु+आस्—कर्मणि वर्त. धा वि.)—सेवा केली जाणारा
अप+अस् (४ प. प)—टाकून देणें
अपरेद्यु (अ.)—दुसरे दिवशी
अपाय —इजा, नुकसान
अप्रतिम (वि)—अतुल, ज्याला तोड नाही असें
अब्रह्मण्यम्—ब्राह्मणावर संकट
अभि+ज्ञा (९ आ प) ओळखणें
अभि+द्रु (१ प प)—हल्ला करणें, चाल करणें
अभिपन्न (अभि+पद्—कर्म भू धा. वि)—स्थितीप्रत गेलेल
अभि+वाद् (१० आ प.)—नमस्कार करणें
अभिवाद्य (अभि+वाद्—ल्यबन्त)—नमस्कार करून
अभीष्टम्—इच्छा
अभ्यर्चनम्—पूजा
अभ्यागत —पाहुणा
अमर —देव
अमर्षण (वि)—रागीट
अमुत्र (अ)—परलोकांत
अम्बुधर —मेघ
अयुक्तम्—अयोग्य गोष्ट
अरविन्दम्—कमळ

अरिमर्दन —शत्रूला मारणारा
अरिहा ( अरिहन् )—शत्रूला मारणारा
अर्क —सूर्य
अर्चित ( अर्च्-कर्म भू धा वि )—
मिळविलेलें
अर्थिन् ( पु )—याचक
अर्थ्य ( वि )—अर्थपूर्ण, सार्थ
अव + इक्ष् ( १ आ प )—वाकूनी
घरा लक्ष देणें
अवहित ( अव + धा कर्म भू धा
वि )—लक्ष असलेला
अवमत ( अव + मन्-कर्म भू धा
वि )—अपमान केलेला
अवगाढ ( अव + गाह् कर्म भू धा
वि )—बुडलेला, तरबेन झालेला
अव + गाह् ( १ आ प )—स्नान
करणें, शिरणें
अर्णव —समुद्र
अवद्य ( वि )—निर्दोष
अवाक्‌शिरस् ( पु )—खाली डोकें
घातलेला
अविलम्बितम् ( अ )—विलम्ब न
लावता
अवध्यत्वम्—ठार करण्यास अयोग्य
स्थिति
अश्मन् ( पु )—दगड
अस्थि ( न )—हाड
अश्विनौ ( पु द्विवचन )—देवांचे वैद्य
अश्विनीकुमार

## आ

आकीर्ण (आ+कॄ-क भू धा वि )—
पसरलेलें
आ + छद् (१० प प आच्छादयति)—
आच्छादणें, लपविणें
आजि (पु स्त्री )—लढाई
आदित्य —सूर्य
आननम्—तोंड
आपतित (आ+पत्-क भू धा वि )—
घडलेलें
आ+पूर (१० उ प )—भरणें वाढवणें
आ+मन्त्र् (१० आ प )—निरोप घेणें
आयत (वि )—लांब
आलय —राहाण्याची जागा, घर
आसादित (आ+सद् (प्र ) क भू धा
वि )—मिळविलेलें
आश्रमकर्मन् (न )—आश्रमाचें काम
आस्यम्—तोंड
आहर्तृ (पु )—हरणारा नेणारा
आहृत्य (आ+हृ चें ल्यबन्त अ )—
नेऊन

## इ ई

इन्द्रजालम्—जादू, नजरबंदी
इष्टम् (इष चें क भू धा वि )—
इच्छिलेलें
ईदृश् (वि )—अशा प्रकारचें

## उ

उच्चाटनम्—हालविणें, घालवून देणें

उच्चैःश्रवस् (पु)—इन्द्राच्या घोड्याचें नाव

उज्झित (उज्झ्—क. भू. धा. वि.)—सोडून दिलेलें

उद्+कृत् (६ प. प.)—तुकडे करणें, कापणें

उत्तरवासस् (न.)—पांघरण्याचें वस्त्र

उत्तरङ्ग (वि.)—उड्या मारणारा, उत्कण्ठित

उद्+सह् (१ आ. प.)—धीर होणें, धजणें

उत्सादित (उद्+सद्—प्र.—क. भू. धा. वि.)—नाश केलेला

उत्सृज्य (उद्+सृज्—ल्यबन्त अ.)—सोडून

उदारधी. (वि)—उदार बुद्धीचा

उदासीन (वि.)—तटस्थ, लक्ष न देणारा

उदीची (वि. स्त्री.)—उत्तर (दिशा)

उदीर्ण (उद्+ऋ—क भू. धा. वि.)—बोललेलें

उद्+धृ (१ प. प.)—उचलणें, वर घेणें

उद्यत (वि.)—तयार

उन्निद्र (वि.)—झोप न आलेले

उपकरणम्—साधन

उप+क्रम् (१ आ. प.)—आरंभ करणें

उपपन्न (उप+पद्—क. भू. धा. वि.)—योग्य

उप+रुध् (७ उ. प.)—अडवणें

उप+स्था (१ प. प.)—जवळ जाणें

उपहित (उप+धा—क भू. धा. वि.)—ठेवलेलें, जोडलेलें

उपानह् (स्त्री)—जोडा

उपार्जित (उप+अर्ज्—क. भू. धा. वि.)—मिळविलेलें

उपेत्य (उप+इ—ल्यबन्त अ.)—जवळ जाऊन

उशीनर.—एका राजाचें नाव-शिबि राजा

## ऊ

ऊषर -म्—नापीक-ओसाड जमीन

ऊरु (पुं)—मांडी

## ऋ

ऋक्ष.—अस्वल

## ए–ऐ

एकाकिन् (वि.)—एकटा

ऐन्द्रजालिकः—जादूगार

## औ

औरस (वि.)—स्वतःचा (मुलगा)

## क

कदम्ब —वृक्षाचें नाव

कन्दर.-म्—गुहा

कम् (१, १० आ. प. कामयते)—प्रेम करणें, इच्छिणें

कवच -म्—चिलखत

कवचिन् (वि)—चिलखत घातलेला
करणम्—साधन
करभ —उंट
कलुष (वि.)—गढूळ, रागावलेला
कह्लारम्—पांढरें कमळ
काङ्क्ष् (१ आ. प.)—इच्छिणें
काननम्—अरण्य
कान्त (वि)—आवडणारें, सुन्दर
कामिनी (स्त्री.)—सुंदर स्त्री
काय —देह
कारण्डव —बदक
कार्पण्यम्—दैन्य, क्षुद्रपणा
कार्श्यम्—बारीकपणा
कालकेया (पु.)—राक्षसाचें नाव
किंकर्तव्यतामूढ (वि.)—काय करावें हें न समजणारा
कियत् (वि)—किती
किरात —रानटी मनुष्य
किसलय -मू—अंकुर, कोंब
कुञ्जर —हत्ती
कुठार —कुऱ्हाड
कुन्द -म्—जाईसारखें फुलझाड
कुमुदम्—चन्द्रविकासी कमळ
कुम्भ —पाण्याचें भांडें, हत्तीचें गण्डस्थल
कुररी—एक हिंस्र पक्षीण
कूटम्—टोंक, वरचा कोपरा, शिखर
कूलम्—तीर, काठ
कृताञ्जलि (पुं)—हात जोडलेले आहेत असा
कृतान्त —यम
कृतास्त्र (वि)—ज्यानें अस्त्राचें अध्ययन केलें आहे असा
कृत्स्नम् (वि.)—सर्व
कृष्णाजिनम्—हरिणाचें कातडें
कॄ (६ प. प. किरति)—पसरणें
कोटर-म्—झाडाची ढोली
कोसल —देशाचें नाव
क्रतु (पुं.)—यज्ञ
क्री (९ उ. प.)—विकत घेणें
क्लिन्न (क्लिद्–क भू धा. वि.)—भिजलेला
क्लिश् (९ प. प)—त्रास होणें
क्षम (वि.)—योग्य, समर्थ
क्षीण (वि.)—थकलेला, कमी झालेला
क्षीराम्भोनिधि (पु)—क्षीरसागर

## ख

खर (वि.)—तीव्र, (ना.)—गाढव.
ख्या (२ प. प.)—सांगणें
ख्यात (ख्या–क. भू. धा. वि.)—प्रसिद्ध
गतक्लम (वि.)—श्रमपरिहार झालेला
गजेन्द्र —उत्तम बैल
गर्ता (स्त्री.)—खड्डा
गहनम्—दाट झाडी, दाट अरण्य
गाढ (वि)—गच्चीचा
गाण्डीवम्—अर्जुनाच्या धनुष्याचें नाव
गुरु: (वि.)—जड, महत्त्वाचा
गुरुत्वम्—मोठेपणा

गृध्नु (वि.)—लोभी
गेहम्—घर
गोप्तृ (पुं.)—रक्षण करणारा
गौरवम्—मोठेपणा
ग्रन्थिल (वि.)—गाठीळ, गाठ असलेलें
घटित (घट् १ आ. प.–क. भू. धा. वि.)—जोडलेलें, बनविलेलें

च

चक्रवाक—पक्ष्याचें नांव
चतुराननः—ब्रह्मदेव
चर्मन् (न.)—चामडें
चारु (वि.)—सुंदर
चार्यताम् (चर्–प्र. कर्मणि आ. तृ. पु. एकव.)—फिरविली जावो
चीरधरः—झाडाच्या साली पांघरणारा
चेतना—शुद्धि, ज्ञान
चेष्टितम्—कृत्य, हालचाल

छ

झ

झटिति (अ.)—जलद, एकदम

त

तपनीयम्—सोनें
तपोधनः—मुनि, यति
तारस्वरः—उंच आवाज
तिलः—तीळ, लहान भाग
तुल् (१० उ. प.)—तोलणें, वजन करणें
तुला—तराजू, बरोबरी, छपराचा निमुळता वासा
तॄ (१ प. प.)—तरून जाणें, तरणें
त्वर् (१ आ. प.)—घाई करणें
त्वष्टृ (पु.)—देवाचा कारागीर
त्रस्त (त्रस्–क. भू. धा. वि.)—भ्यालेला
त्राणम्—रक्षण
त्रिदशाः (पुं. प्रथमा ब. व.)—देव
त्रिदिवम्—स्वर्ग, आकाश

दल् (१ प. प.)—उमलणें, उघडणें, फुटणें
दशन —दात
दानव —राक्षस
दायाद —दाईज, भाऊबंद
दारक —मुलगा
दारा (पु. प्र. ब. व.)—बायको
दारुण (वि.)—भयंकर
दिग्ध (दिह्–क भू. धा. वि.)—लेप दिलेला, सारवलेला, भिनलेला
दिदृक्षु (दृश्–इच्छार्थक उकारान्त नाम) —पाहाण्याची इच्छा करणारा
दिव् (४प. प दीव्यति)—जुगार खेळणें
दिवाकर —सूर्य
दिविष्ठ (वि.)—स्वर्गांत राहणारा
दिव्य (वि.)—स्वर्गीय
दिष्ट्या (अ.)—सुदैवानें
दु (५प प.)—त्रास देणें, पीडा देणें
दुरतिक्रम(वि.)—बदलता न येण्यासारखें
दुराधर्ष (वि.)—जवळ जाण्यास कठीण, पराभव करण्यास कठीण
दुर्मद (वि.)—उन्मत्त झालेला
देय (दा–कर्मणि वि धा. वि.)—देण्यास योग्य
देवदत्त —अर्जुनाच्या शंखाचें नाव
देवनम्—द्यूत, शोक
देवराज —इन्द्र
द्युति (स्त्री.)—तेज
द्विज —ब्राह्मण, पक्षी
द्विजाति (पुं.)—ब्राह्मण
द्रुम —वृक्ष, झाड

## ध

धनुर्धरः—योद्धा
धरणी—पृथ्वी
धर्म —स्थिति, गुण
धामन् (न.)—ठिकाण, तेज
धारापथ—तलवारीच्या धारेचा मार्ग
धृत (धृ–क. भू धा. वि.)—रक्षण केलेलें
धौत (वि.)—शुभ्र, धुतलेला
ध्मा (१प. प. धमति)—फुंकणें, वाजवणें

## न

नय —नीति, न्याय
नलिनी (स्त्री.)—कमळानीं युक्त सळें
नन्दिग्राम —भरताच्या मामाचें गाव
नाना (अ.)—विविध प्रकारानीं (समासाच्या आरंभीं विशेषणासारखा उपयोग होतो)
नामास्त —नावाचा लोप
नाराच —बाण
निकाम (वि.)—सारखा
निकृति (स्त्री.)—अपमान
निक्षेप—ठेव
निगड –डम्—बिडी, साखळदंड
निग्रह—अटकाव, ताब्यात ठेवणें
निघ्नन् (नि+हन्–वर्त. धा. वि.)—मारीत, मारणारा
निदाघ—उन्हाळा

निदेश—सूचना, हुकूम
निपीत (नि+पा–कर्म. भू. धा. वि.) पूर्णपणें प्यालेला
निभ (वि.)—सारखा (हा शब्द समासाच्या शेवटीं येतो)
निभृत (वि.)—गुप्त, लपलेला
नियुक्त (नि+युज्–क. भू. धा. वि.)—नेमलेला
निम्नगा—नदी, सखल प्रदेशाकडे जाणारी
निर्झर—ओढा
निर्दयम् (अ.)—निर्दयपणें
निर्+भर्त्स् (१० आ. प.)—निंदा करणें
निर्+मा (३ आ. प.)—निर्माण करणें, बांधणें
निर्लीन (निर्+ली–क. भू. धा. वि.)—लपलेला
निशम्य (नि+शम्–चें ल्यबन्त)—ऐकून
निशीथ—मध्यरात्र
निषादराज—रानटी लोकांचा राजा
निष्क्रान्त (निस्+क्रम्–क. भू. धा. वि.)—निघून गेलेला
निष्पन्न (निस्+पद्–क. भू. धा. वि.)—ठरलेला, झालेला
निःस्वन—मोठा आवाज
निहत (नि+हन्–क. भू. धा. वि.)—ठार केलेला
नेपथ्ये—पडद्यांत (नेपथ्य शब्दाची सप्तमी ए. व.)
नैषादि—निषादाचा मुलगा
नैसर्गिक (वि. स्त्री–की)—स्वाभाविक
नो चेत् (अव्यय)—नाहीं तर
न्यस्त (नि+अस्–क. भू. धा. वि.)—ठेवलेला

प

पक्षपातिन् (वि.)—बाजू घेणारा, अनुकूल
पङ्क—चिखल
पङ्कजम्—कमळ
पत्रपुटम्—पानाचा द्रोण
पदाति—पायानीं चालणारा
पद्मिनी—कमळाची वेल, कमळानीं युक्त तळें
परपुरंजय—श्रेष्ठ योद्धा
परमेष्ठिन् (पु.)—ब्रह्मदेव
परासु (वि.)—प्राण गेलेला
परिग्रह—स्वीकार
परिदेवनम्—शोक
परिदेव् (१० प. प.)—शोक करणें
परिधाय (परि+धा–ल्यबन्त)—अंगावर घेऊन
परिमल—सुगंध
परिमार्गणम्—शोध
परिवार्य (परि+वृ प्र. । ल्यबन्त)—वेढून
पर्युत्सुक (वि.)—उत्कण्ठित
पाथेयम्—मार्गावरील तरतूद
पायोद—मेघ

पाथोदधिः (पु.)—समुद्र
पादप —वृक्ष, झाड
पार -रम्—पलीकडील तीर, पूर्णत्व
पावक —अग्नि
पाशुपत (वि.)—शंकराचें
पाषाण —दगड
पिक—कोकिळ
पिच्छिका—मोराच्या पिसांची जुडी
पितामह —भीष्म, ब्रह्मदेव
पितृव्य —चुलता
पिनाकिन् (पु.)—शंकर
पिपासित-(पा. इच्छार्थक क. भू. धा. वि.)—पिण्याची इच्छा केलेला, तहानेलेला
पुरस् (अव्यय)—पुढल्याप्रमाणें
पुरुषकार —पराक्रम
पुरोधस् (पु.)—पुरोहित
पूर्ति (स्त्री)—पुरी करणें
पूर्वाभ्यस्त (वि.)—पूर्वीचा परिचय असलेला
पूर्वेद्यु (अव्यय)—पूर्वीच्या दिवशीं
पुलिन -नम्—वाळवंट
पुष्पधर (पु.)—फुललेला (वृक्ष)
पोतक —वासरूं, बच्चा
प्रकर्ष —आधिक्य, श्रेष्ठपणा
प्रकाश (वि.)—स्वच्छ
प्रकाशय (प्र+काश्-प्र.)—तेजस्वी करणें, उघड करणें

प्रकीर्ण (प्र+कॄ-क. भू. धा. वि.)—पसरलेला
प्रणय —प्रेम, विनंति, मैत्री
प्रतापितः (प्र+तप्-प्र.-क. भू. धा. वि.)—तापविलेला
प्रतापिन् (पुं.)—पराक्रमी
प्रतिपाल्य (प्रति+पाल्-प्र.)—वाट पाहणें
प्रतिभयम्—संकट (वि. भयंकर)
प्रतियामम्—(अव्ययीभाव समास)—रात्रीच्या प्रत्येक चौथ्या भागांत
प्रत्यय —विश्वास, खात्री
प्रत्याख्यात (प्रति+आ+ख्या-क. भू. धा. वि.)—नाकारलेला, टाकलेला
प्रत्यागत (प्रति+आ+गम्-क. भू. धा. वि.)—परतलेला
प्रत्यूषे (अ.)—अगदीं सकाळीं
प्रपद् (४ आ. प.)—शरण जाणें, प्राप्त होणें
प्रपन्न (प्र+पद्-क. भू. धा. वि.)—शरण आलेला, स्थितीप्रत गेलेला
प्रपात —धबधबा
प्रवर (वि.)—श्रेष्ठ
प्र+शास् (२ प. प.)—उपदेश करणें, सत्ता चालवणें
प्रसक्त (प्र+सञ्ज्-क. भू. धा. वि.)—गटलेला
प्रसन्न (प्र+सद्-क. भू. धा. वि.)—स्वच्छ, संतुष्ट

प्रसादातर्प —फार मोठी कृपा
प्रहरणम्—शस्त्र
प्रहास —थट्टा, शोभा
प्रांशु (वि.)—उंच
प्रांजलि (वि.)—हात जोडले आहेत असा
प्रापित (प्र+आप्—प्र—क. भू. धा वि.)—पोहोंचविलेला
प्र+अर्थ् (१० आ. प.)—पाठलाग करणें, प्रार्थना करणें
प्रार्थना—विनति
प्रार्थनीया—इच्छिण्यास योग्य
प्रावरणम्—आच्छादन, वस्त्र
प्रेरय (प्र+इण्-प्र)—पाठविणें
प्रेष्य —नोकर, दास
प्लवङ्ग —वानर

फ

फणिन् (पु.)—सर्प
फलवर्यम्—उत्कृष्ट फळ
फल्गु (वि.)—निरुपयोगी
फाल्गुन —अर्जुनाचें नाव
फेन —फेंस

ब

बदरम्—बोर
बलान्वित (वि.)—पुष्कळ बगळे असलेला
बर्ह -र्हम्—मोराचें पीस
बहुल (वि.)—पुष्कळ
बहुलीभू (च्वि रूप)—पुष्कळ होणें
बालिश (वि.)—पोरकट, मूर्खपणाचें
बृहत् (वि.)—मोठा
बृहस्पति —देवांचा गुरु
बोधय (बुध्-प्र)—जागें करणें, उपदेश करणें
ब्रह्मण्य (वि.)—ब्राह्मणांना हितकर, धार्मिक

भ

भस्मीकृ (च्वि रूप)—भस्म करणें
भ्रम् (प्रयोजक)—फिरविणें, हालविणें
भा—तेज
भाण्डम्—भांडें
भीम—(वि.)—भयकर
भीरु (वि.)—भिना
भीषण (वि.)—भयंकर
भुजगी—सर्पीण
भूतेश —महादेव
भूयः (अव्यय)—पुन्हा

म

मघवन् (पुं.)—इन्द्र
मथनम्—नाश, घुसळणें
मनीषिन् (पु.)—मन ताब्यात असलेला मनुष्य, शहाणा मनुष्य
मन्थ् (९ प. प.)—घुसळणें
मन्यु —रवी
मल —पाप

